# पदार्थदीपिका

## महामहोपाध्यायकौण्डभट्टविरचिता

काशीस्थराजकीयसंस्कृतपाठशालाध्यापक-
पटवर्धनोपनामकेन तात्याशास्त्रिणा
संशोधिता

यह पुस्तक व्रजभूषणदास और कम्पनी के
पुस्तकालय में मिलेगी ।

बनारस ।

Published
by
BRAJ. B. DAS & CO.
BENARES.
Raj-Rajeswari Press.
1900

॥ श्रीः ॥

# भूमिका।

सन्त्यनेके तर्कशास्त्रेषु चिन्तामणिगादाधरीमाथुरीजागदीशीसिद्धान्तमुक्तावलीप्रभृतय उत्तमाधिकारिणां तर्कसंग्रहप्रभृतयो मन्दाधिकारिणामुपकाराय बहुतरास्तत्तत्तार्किकैर्निर्मिता निबन्धास्तथापि मध्यमाधिकारिकल्पानामल्पधियामध्येतॄणां सुबोधाय विविधमतान्तरीयविषयविभूषितस्तर्कशास्त्रीयबहुविधपदार्थोपपादको न कोऽप्यद्यावधि कैश्चिन्निर्मितो निबन्ध इत्यालोच्य तथाविधविद्यार्थिनामुपयोगाय श्रीकोण्डभट्टविदुषा तर्कदीपिका नाम सुप्रबन्धो निबन्धोऽयं निरमायि। अयं च निबन्धकारो महामहोपाध्यायभट्टोजिदीक्षितभ्रातुष्पुत्र इति "भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये" इत्येतत्कृतवैयाकरणभूषणस्थलेखतोऽवगत्या सुव्यक्त एव प्रसिद्धतरतत्कालनिर्णयेनैतत्कालनिर्णयोपि। एतत्पुस्तकमतीवालभ्यं केवलं काशीस्थराजकीयसंस्कृतपाठशालास्थपुस्तकागारात्पुरातनमेकमन्ते कीटादिभक्षितकतिपयाक्षरकमशुद्धमासाद्य श्रेष्ठिवरहरिदासमहोदयानां निर्बन्धप्रार्थनया परमपरिश्रमेण च परिशोध्य निस्सार्य च सुबहूनि स्खलितानि संयोज्य च सुविचारेण तत्रतत्रोपयुक्तान्यक्षराणि वाराणसेयसंस्कृतसेरिजाख्यपुस्तकावल्यां विद्यारसिकाना-

श्रीगणेशाय नमः ॥

# पदार्थदीपिका प्रारम्भ्यते।

श्रीमत्सिद्धिकरं कान्तं रमोमारमणात्मकम् ।
दयासिन्धुं चिदानन्दं सितासितमुपास्महे ॥ १॥

इह खलु चतुर्थपुरुषार्थहेतुभूतमात्मतत्त्वज्ञानमामनन्ति । तच्च पदार्थतत्त्वानिर्णयाधीनमिति पदार्थतत्त्वमत्र विविच्यते ॥ तत्र—

प्रमितिविषयः पदार्थः ॥

स द्विधा भावो ऽभावश्च । भावाः षडेव द्रव्यगुणकर्मसामान्यविशेषसमवायभेदात् । तत्र—

द्रव्यत्वजातिमद्, गुणाश्रयो वा द्रव्यम् ॥

तच्च पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदान्नवधा । तत्र—

पृथिवीत्वजातिमती गन्धवती वा पृथिवी ॥

मणिमुक्तावज्रादावप्यनुद्भूतगन्धोऽस्त्येवेति न तत्राव्याप्तिः । तद्भस्मनि गन्धोपलम्भेन तत्रापि गन्धकल्पनात् । मण्यादयः गन्धवन्तः गन्धवद्भूम्यारम्भकावयवारब्धत्वात् महापटवत् । अथ वा गन्धवत्त्वं गन्धसमानाधिकरणजलावृत्तिजातिमत्त्वम् । गन्धसमानाधिकरणद्रव्यत्वादिकमादाय जलादावतिव्याप्तिवारणाय जलावृत्तीति । एतेन नानागन्धवदारब्धपदार्थस्य निर्गन्धत्वपक्षेपि न तत्राव्याप्तिस्तादृशपार्थिवीत्वसत्त्वात् । सा च

मुपकारायैककर्तृकत्वाद्वैयाकरणभूषणेन सहैव चैकस्मिन् पुटके संमुद्रये । संप्रार्थये च सर्वान्तःप्रेरकं परमेश्वरं विश्वनाथं सदा पठनपाठनादिप्रचारेण मामकीनं संशोधनादिकं मुद्रणायासं विद्वज्जनः सफलयतादिति ।

| | |
|---|---|
| माघ वदि १३ सोमे<br>सं० १९५६ | काशीस्थराजकीयसंस्कृत-<br>पाठशालाध्यापकः पट-<br>वर्धनोपनामको |

रामकृष्णशास्त्री ।



श्रीगणेशाय नमः ॥

# पदार्थदीपिका प्रारभ्यते ।

श्रीमत्सिद्धिकरं कान्तं रमोमारमणात्मकम् ।
दयासिन्धुं चिदानन्दं सितासितमुपास्महे ॥ १॥

इह खलु चतुर्थपुरुषार्थहेतुभूतमात्मतत्त्वज्ञानमामनन्ति । तच्च पदार्थतत्त्वनिर्णयाधीनमिति पदार्थतत्त्वमत्र विविच्यते ॥ तत्र—

प्रमितिविषयः पदार्थः ॥

स द्विधा भावोऽभावश्च । भावाः षडेव द्रव्यगुणकर्मसामान्यविशेषसमवायभेदात् । तत्र—

द्रव्यत्वजातिमद्, गुणाश्रयो वा द्रव्यम् ॥

तच्च पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदान्नवधा । तत्र—

पृथिवीत्वजातिमती गन्धवती वा पृथिवी ॥

मणिमुक्तावज्रादावप्यनुद्भूतगन्धोऽस्त्येवेति न तत्राव्याप्तिः । तद्भस्मनि गन्धोपलम्भेन तत्रापि गन्धकल्पनात् । मण्यादयः गन्धवन्तः गन्धवद्द्रव्यारम्भकावयवारब्धत्वात् महापटवत् । अथवा गन्धवत्त्वं गन्धसमानाधिकरणजलावृत्तिजातिमत्त्वम् । गन्धसमानाधिकरणद्रव्यत्वादिकमादाय जलादावतिव्याप्तिवारणाय जलाऽवृत्तीति । एतेन नानागन्धवदारब्धपदार्थस्य निर्गन्धत्वपक्षेऽपि न तत्राव्याप्तिस्तादृशपृथिवीत्वसत्त्वात् । सा च

तेजस्त्वजातिमदुष्णस्पर्शवद्वा परमकाशरूपवद्वा तेजः ॥

नित्यमनित्यं च । परमाणुरूपं नित्यं कार्यरूपमनित्यम् । तदपि त्रिधा शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके । इन्द्रियं चक्षुः रूपतज्जातितद्वद्द्रव्यतद्गतजातिगुणकर्मणां ग्राहकं कृष्णताराग्रवर्त्ति । तत्तैजसमेव, रूपादिषु पञ्चसु रूपस्यैवाभिव्यञ्जकत्वात् आलोकवत् । पूर्ववद्गृहीतव्यामलकादौ व्यभिचारवारणायैवकारः ॥

ननु रूपवान् परमाणुश्चक्षुषा कुतो न गृह्यते । चाक्षुषप्रत्यक्षे विषयद्रव्यगतं रूपं महत्त्वं हेतुः परमाणौ तन्नास्तीति चेत्, तर्ह्याकाशात्मादयः कुतो न गृह्यन्ते । विषयगतं रूपं महत्त्वं चेति द्वयमपि हेतुरिति चेत्, तर्हि तप्तवारिस्थं तेज उष्मा वा कुतो न गृह्यते । उच्यते । द्रव्यचाक्षुषप्रत्यक्षे विषयगतमुद्भूतरूपं महत्त्वं च कारणं, परमाणुर्न महानाकाशो न रूपवान् तप्तवारिस्थं तेजश्च नोद्भूतरूपवत् । तद्रूपस्यानुद्भूतत्वात् । एवं चाक्षुषप्रत्यक्षे विषयगत उद्भूतस्पर्शोऽपि हेतुः । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रएव महत्त्वरूपस्पर्शानां कारणत्वाद्धेतुत्वात् । तथा च प्रदीपादिप्रभाया रूपमात्रं गृह्यते तेन तदाश्रयद्रव्यमनुमीयत इति सिद्धान्तः । प्रभाशब्दोऽपि तद्रूपवाचक एवेत्याहुः ॥

नन्वेवमपि अन्धकारस्थो घटोऽपि गृह्येत द्रव्यचाक्षुषे आलोकसंयोगोऽपि हेतुरिति चेत्, न, चक्षूरूपस्य सुवर्णरूपस्य वा अंधकारेऽपि संयोगसत्त्वादिति चेन्न । द्रव्यप्रत्यक्षे उद्भूतानभिभूतरूपालोकसंयोगस्य हेतुत्वात् । चक्षूरूपस्योद्भूतत्वाभावात् सुवर्णरूपस्याभिभूतत्वात्तत्संयोगेऽपि न प्रत्यक्षम् । विषयश्चतुर्धा भौमं दिव्यमौदर्यमाकरजं च । पार्थिवमात्रेन्धनं तेजो भौममग्न्यादि । अबिन्धनं तेजो दिव्यं विद्युदादि । उभयेन्धनमौदर्यं भासितान्नस्य

पीतजलस्य च पाचनात् । खनिजमाकरजं सुवर्णादि ॥

ननु सवर्णं न तेजः परप्रकाशकरूपविरहात् उष्णस्पर्शाभावाच्चेति चेन्न । अभिभूतरूपस्पर्शयोस्तत्र स्वीकारात् । पीतरूपवन्तः पार्थिवभागास्तत्र मिलताः सन्तीति तदीयरूपस्पर्शाभ्यां तयोरभिभवसम्भवस्यैव । बलवत्सजातीयग्रहणकृतमग्रहणं अभिभवस्तारकाद्यनामन्दस्येव ॥

मीमांसकास्तु पीतरूपवत् द्रव्यान्तरमेव सुवर्णमूचिरे । तन्न । द्रव्यान्तरकल्पने गौरवात् ॥

अन्ये तु हरिद्रादिवत्पीतरूपवत्त्वात्पृथिव्येव सुवर्णमित्याहुः । तन्न । अत्यन्तानलसंयोगाद्रसापत्तेः ॥

वायुत्वजात्यरूपस्पर्शवान्वा वायुः ॥

सोपि द्विधा नित्यो ऽनित्यश्च । परमाणुरूपो नित्यः कार्यरूपो ऽनित्यः । सोपि शरीरेन्द्रियविषयप्राणभेदात् चतुर्धा । शरीरं वायुलोके पिशाचादीनां च । इन्द्रियं त्वक् सकलशरीरव्यापकम् । सिद्धान्तान्यां नस्तत्वेपि तन्मनोयोगस्य स्वप्नजनकत्वात् तदा स्वाप्नज्ञानमेव न त्वाचादि । पुरीतत्त्वं परं नास्ति अवस्तस्या मनःप्रवेशे ज्ञानशून्या सुषुप्तिर्भवति, ज्ञानमात्रे त्वङ्मनोयोगस्य हेतुत्वेन तदानीं तदभावाज्ज्ञानाभावोपपत्तेः । तत्तु वायवीयमेव रूपादिषु पञ्चसु स्पर्शस्यैवाभिव्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत् । एतादृशो न करतलाभिव्यञ्जके व्यभिचारवारणार्थमेतत् । तच्चोद्भूतस्पर्शनत्वजातितदभावोद्भूतस्पर्शवद्द्रव्यतद्गतगुणतज्जातितदभावानां ग्राहकम् । अत उद्भूतरूपाभावात् प्रत्यक्षाविषयं तेजो, रूपाभावाद्वायुश्च त्वचा न गृह्यते, किं तु तत्स्पर्शमात्रं गृह्यते तदाश्रयत्वेन वायुरनुमीयते इति सिद्धान्तः । एवं प्रदीपप्रभाचन्द्रा

दिप्रभापि न त्वचा गृह्यते उद्भूतस्पर्शाभावात् ॥

मीमांसकस्तु उद्भूतस्पर्शवद् द्रव्यं त्वचो योग्यं लाघवात् न तु रूपमपि तत्र प्रवेश्यं गौरवात् । अतो वायुरपि स्पार्शनप्रत्यक्ष एव । अत एव वायुं स्पृशामीत्यनुभवः । अन्यथा घटादेः स्पर्शो गृह्यते तेन तद् द्रव्यमनुमीयते इति वक्तुं शक्यत्वात् किमपि द्रव्यं स्पार्शनप्रत्यक्षं न स्यात् । किं च चक्षुषा रूपं गृह्यते घटादि तदाश्रयत्वेनानुमीयतइत्यपि स्यात् । तथा च द्रव्यमतीन्द्रियमेव स्यात् । एवं महदुद्भूतरूपवद्द्रव्यं चक्षुर्योग्यम् । अतः प्रदीपचन्द्रादिप्रभापि चक्षुर्ग्राह्यैवेत्याहुः । विषयस्तु वृक्षादिकम्पजनकः । प्राणः पञ्चधा प्राणापानव्यानोदानसमानभेदात् ॥

शब्दाश्रय आकाशः ॥

स च तत्कार्यस्य शब्दस्य सर्वत्रोपलम्भात् विभुः, लाघवादेको नित्यश्च श्रोत्रं तदीयमिन्द्रियम् । अदृष्टविशेषोपगृहीतकर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम् । बधिरस्यादृष्टविशेषाभावान्न श्रोत्रमस्ति ॥

कालिकपरत्वापरत्वानुमेयः कालः ॥

स चैकोपि वर्त्तमानातीतभविष्यत्क्रियोपाधिवशाद्वर्तमानादिसंज्ञां लभते । पाकपठनादिक्रियावशात् पाचकपाठकादिव्यपदेशवत् ॥

दिगेका नित्या दैशिकपरत्वापरत्वासाधारणकारणम् ॥

सा चेन्द्रयमाग्निनिर्ऋतिवरुणवायुकुबेरेशानब्रह्मानन्तरूपोपाधिवशात् पूर्वादिभेदेन दश संज्ञा लभते । एतौ दिक्कालौ जगदाधारौ जगद्धेतू च । इहेदानीं करोमीति सर्वानुभवात् ॥

आत्मत्वसामान्यवान् ज्ञानाश्रयो वा आत्मा विभुर्नित्य-

श्चेति ॥

स द्विधा जीवेश्वरभेदात् । सुखाद्याश्रयोऽहम्प्रत्ययवेद्यो जीवः ॥

नन्वहं गौरोऽहं जानामीतिसामानाधिकरण्योपलम्भाद्गौरत्वादिरूपवति ज्ञानसुखाद्याश्रयता सिध्यतीति देह एव आत्मा स्यात् । न च शरीरं नात्मा ज्ञानशून्यत्वात् । तदपि शरीरं ज्ञानशून्यं पार्थिवत्वात् घटवदित्यनुमानात् सिध्यतीति वाच्यम् । घटस्य केवलपार्थिवत्वाज्ज्ञानशून्यत्वेऽपि भूतसमुदायात्मकत्वात् शरीरस्य ज्ञानवत्त्वसम्भवात् । केवलचूर्णादौ रागाभावेऽपि चूर्णपर्णादिसमुदाये ताम्बूले रागोत्पत्तिवत् । अहं ज्ञानवानिति प्रत्यक्षबाधेनानुमानस्य शरीरे ज्ञानाभावाऽसाधकत्वाच्च वन्हिरनुष्णः कृतकत्वात् घटवदित्यनुमानवत् । स्वीचक्रुश्च देह एवात्मेति चार्वाकाः । एवं काणोऽहं बधिरोऽहमिति इन्द्रियधर्मसामानाधिकरण्यादिन्द्रियाण्येवात्मेत्यपरे वदन्ति, तत्कथं नित्यो विभुरात्मेति सङ्गच्छेत इति चेन्न । शरीरेन्द्रियाणामनित्यत्वेनात्मत्वासम्भवात् । न चात्माप्यनित्य एवास्तु, कृतहानाकृताभ्यागमप्रसङ्गात् । धर्माधर्मशास्त्रवैयर्थ्यापत्तेः । किं च कश्चिदुत्पत्तिमारभ्यैव रूपभाग्यादिमान् नान्य इति नियमायाऽदृष्टविशेषो हेतुर्वाच्यः स चैतज्जन्मनि न सम्पादित इति तत्सम्पादकजन्मान्तरयोग्यात्मसिद्धिः । अनेकजन्मयोगिनश्च नित्यत्वैव नाशकाभावात् । न च स्वतन्त्र ईश्वर एव स्वेच्छावशात् स्वसृष्टप्राणिष्वेवं करोति कुलाल इव स्वनिर्मितघटेषु क्व चित् दुग्धयोगं क्व चित् मूत्रपुरीषयोगमिति वाच्यम् । अचेतनेष्विव चेतने तथा व्यवहारे वैषम्यनैर्घृण्यप्रसङ्गात् । दृश्यते च कुलालादेरेव घटादिवत्पुत्रेषु निर्निमित्तकतया व्यवहारे वैषम्यादिप्रयुक्ता नि-

न्द्येति । न चायं नित्य परमाणुरूप एवास्तु, सकलशरीरव्यापि-
सुखदुःखाननुभवप्रसङ्गात् । परमाणुरूपत्वे ज्ञानादेस्तद्धर्मस्या-
प्रत्यक्षत्वापत्तेश्च । स च प्रतिशरीरं भिन्नः सुखदुःखाद्ययौग-
पद्याद्वैचित्र्याच्च । अन्यथा परकीयसुखदुःखानुसन्धानप्रसङ्गा-
च्च हस्तपादादिभेदस्येव शरीरभेदस्याप्रयोजकतयाननुसन्धाना-
ऽप्रयोजकत्वात् जातिस्मराणां जन्मान्तरीयार्थस्मरणानापत्तेश्चे-
ति दिक् । दुःखासमानाधिकरणज्ञानवानित्यज्ञानाश्रयो स ई-
श्वरः । स च सकलकार्यकर्तृत्वेन सिद्ध्यतीति वक्ष्यते ॥

आत्मतद्गुणादिप्रत्यक्षकरणं मनः ॥

तच्च परमाणुपरिमाणं प्रतिपुरुषं भिन्नं यत्रयत्रेन्द्रिये सं-
युज्यते ततस्ततो ज्ञानमुत्पद्यते । अतो युगपदनेकेन्द्रियैर्ज्ञानाभा-
वोपपत्तिः । अन्यथा युगपद्रूपशब्दादिग्रहणापत्तौ व्यासङ्गान्न
ज्ञातमित्यनुभवानापत्तेः । तथा च गौतमसूत्रं "युगपज्ज्ञानानु-
त्पत्तिर्मनसो लिङ्ग" मिति । अत एव मनो विभुः निःस्पर्शद्र-
व्यत्वात् आकाशवदिति मीमांसकोक्तमपास्तम् । अवधानिनां
तु अभ्यासविशेषात्प्रेरणया झटिति मनसि क्रियया तत्तदिन्द्रि-
यैर्योगाज्ज्ञानक्रमिकत्वेऽपि यौगपद्याभिमानमात्रम् ॥

अन्धकारोऽपि निःस्पर्शवत्त्वात् क्रियावत्त्वादिलक्षणरूप-
वत्त्वाच्च पृथिव्यादिभ्यो भिन्नं दशमं द्रव्यमस्तीति कथं नवैव
द्रव्याणि इति चेत् । नैवम् । तस्य रूपवद्द्रव्यत्वे चक्षुषा ग्रहणं
न स्यात् । द्रव्यचाक्षुषमात्रे उद्भूतानभिभूतरूपवदालोकसंयोग-
स्य हेतुत्वात् । न च चक्षुर्गोलकवृत्तितामसेन्द्रियान्तरादन्धकार-
ग्रहः । इन्द्रियान्तरकल्पने गौरवात् । किं चान्धकारसमनियत
आलोकाभावो ऽवश्यमभ्युपेयः । तथा च तेनैवारोपितनीलरू-
पेणान्धकार इति व्यवहारसम्भवान्न द्रव्यान्तरं तमः । अति-

गौरवात् । तस्मादुद्भूतानभिभूतरूपवदालोकाभावसमूहस्तमः ॥

गुणत्वजातिमन्तो गुणाः ॥

ते च रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारशब्दाश्चतुर्विंशतिरेव ॥

तत्र रूपत्वजातिमद्रूपम् ॥

पृथिव्यादित्रयवृत्ति । शुक्लपीतहरितरक्तकृष्णकपिलचित्रभेदात्सप्तधा । तदवान्तरजातयस्तु असङ्ख्याताः । तत्र शुक्लभास्वरं तेजसि । परप्रकाशकतावच्छेदकजातिविशेषो भास्वरत्वं तद्वद् भास्वरम् । शुक्लमेवाभास्वरमपाकजमप्सु षड्विधमचित्रम् । पाकजं पृथिवीपरमाणौ सप्तविधमपि अपाकजमेव पृथिवीद्व्यणुकादौ । तत्रावयविरूपं कारणम् । एवं रसादावपि । मीमांसकास्त्वेकैका एव नीलपीतारुणादिव्यक्तयो नित्याश्च । ताश्चोत्पद्यमानघटादौ घटत्वादिवत्संसृज्यन्ते इति रूपवान् घट इत्यादिप्रतीतिः । घटादिनाशे च व्यक्त्यन्तरे घटत्वादिवदेव वर्तन्त इत्याहुः । तन्न । एवं हि घटत्वादिवज्जातित्वापत्तेः । नित्यमेकमनेकसमवेतं सामान्यमिति तल्लक्षणयोगात् । इष्टापत्तौ नीलनीलतरादिव्यवहारानापत्तेः । नहि भवति गोत्वतरो गोत्वतम इति । किं नीलद्रव्यस्य पाकेन रक्ततायां दर्शनस्थले पूर्वनाशस्याऽकामेनाप्यभ्युपेयत्वान्न किं चिदेतत् ॥

रसत्वजातिमान् रसः ॥

पृथिवीजलवृत्तिः । मधुराम्लकटुतिक्तकषायलवणभेदात् षोढा । मधुरोऽपाकजोऽप्सु षड्विधोऽपि । पाकजः पृथिवीपरमाणौ द्व्यणुकादावपाकजः ॥

गन्धत्वजातिमान् गन्धः ॥

पृथिवीमात्रवृत्तिः । जलादौ तूपष्टम्भकभागगत एव लोहितस्फटिक इतिवत् प्रतीयते । अत एव पुष्पाद्युपरिसपागतया पुनः पुष्पाद्यवयवा एव नीयन्ते इति सिद्धान्तः ॥

नन्वेवं पुष्पादेः सच्छिद्रता, कस्तूर्यादेः परिमाणन्यूनता च स्यादिति चेन्न । भोजकाऽदृष्टवशात् पुनर्भागानां पूरणाभ्युपगमात् । एवं चिरकर्पूरादौ तथात्वस्येष्टत्वात् । सुरभिरसुरभिश्चेति द्विधा, सोऽपि पाकजः परमाणौ द्व्यणुकादावपाकजः ॥

स्पर्शत्वजातिमान् स्पर्शः ॥

पृथिव्यादिचतुष्टयवृत्तिः शीतोष्णानुष्णाशीतभेदात्त्रिधा । शीतोऽप्सु । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः । वायावपाकज एव पृथिवीपरमाणौ पाकजः पृथिवीद्व्यणुकादावपाकजः । कोमलकठिनचिक्कभेदाद् अनेकधा ॥

ननु कथं रूपस्पर्शावेव चित्रावुदाहृतौ रसगन्धयोरपि हरीतक्यादौ विचित्रयोर्दर्शनात् । न च तत्र नानारससमुदाय एव भासते षड्रसा हरीतकीति व्यवहारादिति वाच्यम् । रूपस्पर्शयोरप्येवमापत्तेः । चित्ररूपवति अत्र श्याममत्र रक्तमित्याद्यनुभवाद्व्यवहाराच्चेति चेत् । उच्यते । न तावन्नीलपीतारब्धे नीलं सम्भवति, समवायेन नीलं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलेतरस्य प्रतिबन्धकत्वात् । अन्यथा पीतावच्छेदेनापि नीलापत्तेः । नापि परस्परप्रतिबन्धादुभयोरसम्भवेन नीरूपत्वमेवास्त्विति वाच्यम् । अतीन्द्रियत्वापत्तेः । विषयगतोद्भूतरूपस्य प्रत्यक्षहेतुतायाः प्रागभिहितत्वात् । तस्मान्नीलपीतादिविलक्षणमेव चित्रं तत्र जन्यत इति वक्तुं शक्यत्वात् । एवं स्पर्शेऽप्यवधेयम् । गन्धरसयोस्तथास्वीकारेऽपि न क्षतिः । तयोः प्रत्यक्षाहेतुत्वात् । केचित्तु चित्ररसगन्धावपीच्छन्ति । तत्तु वर्द्धमानादिव-

नादृतम् ॥

ननु रूपादयः पृथिवीपरमाणावेव पाकजा इति कथं सङ्गच्छताम्। आमपाकनिक्षिप्तघटादावपि पूर्वरूपनाशपरोत्पत्त्योरनुभवसिद्धत्वादिति चेत्,सत्यम्। घटमध्येपि पाकजरूपाद्यनुभवसिद्धं तत्र वह्न्यग्निसंयोगं ज्ञापयति अग्निसंयोगस्यैव पाकजनकत्वात्। तथा च वन्ह्यभिघातात् तत्र परमाणुपर्यन्तं घटावयवतदवयवानां विभागः। ततः परस्परसंयोगनाशः। ततो विशकलितेषु तन्तुषु पटनाशवदसमवायिकारणनाशात् द्रव्यनाशे स्वतन्त्राः परमाणवः पच्यन्ते तत्र कदाचित्समानाग्निसंयोगादेकजातीयं, विलक्षणाच्च परस्परविलक्षणं रूपमुत्पद्यते, पुनर्भोजकादृष्टसहकृत ईश्वर एव सृष्ट्याक्षराविव द्व्यणुकादिक्रमेण पूर्ववदेव तादृशरेखोपरेखासंस्थानवत् करोति। तथा च परमाणुरूपाद् द्व्यणुके ततः त्र्यणुके इति क्रमेण पूर्वकुलालनिर्मितघटइव तत्रापि रूपाद्युत्पत्तिरिति भवति परमाणावेव पाकजरूपरसगन्धस्पर्शाः न द्व्यणुकादाविति। घटादावेव पाकाभ्युपगमे कठिनघटादिमध्यभागे वन्ह्यप्रवेशान्मध्येपि पूर्वरूपादिनाशनवीनोत्पत्ती न स्यातामिति काणादाः॥

नैयायिकास्तु घटादयः सच्छिद्राण्येव द्रव्याणि, कथमन्यथा भाण्डान्तर्गततण्डुलादिपाकः कथं वा तन्मध्यवर्त्तिजलस्यन्दनप्रस्रवणे। तथा च तद्द्वारा प्रविष्टवन्हिना मध्येपि पाकसम्भवाद्गौरवग्रस्तनिष्प्रमाणकपूर्वनाशनवीनोत्पत्तिकल्पनां तदुत्पादनायेश्वरे भारं च न सहन्ते। तथा च तन्मते घटादावपि पाकः सिध्यति ॥

ननु संयोगस्योभयनिष्ठत्वाद् घटादाविव वन्ह्यादावपि रूपादयः कुतो न भवन्तीति चेत, सत्यम्। समवायेन पाकजरूपं

प्रति पृथिवीत्वेन हेतुत्वात् वन्हेस्तेजस्त्वात् । इदमेव च पृथिवीत्वजातौ प्रमाणम् ॥

ननु सतद्रूपेप्यग्निसंयोगादेकस्माद्विलक्षणा भिन्नाश्च रूपादय कथं प्रागभावभेदादिति चेन्न । तस्य वैलक्षण्याप्रयोजकत्वात् । अन्यथा घटादीनामपि पटादिवत्परस्परवैलक्षण्यापत्तिरिति चेन्न । रूपवति घटे रूपान्तरानुत्पत्तेः रूपं प्रति रूपं प्रतिबन्धकमिति सर्वसिद्धम् । एवं रसादावपि । तथा च प्रतिबन्धकाभावरूपतत्तद्भावकारणभेदवैलक्षण्याभ्यां भेदवैलक्षण्ये द्वित्वत्रित्वादिजद्व्यणुकत्र्यणुकाणुत्वह्रस्वत्वदीर्घत्वमहत्वेष्वप्येव मेवादि । के चित्तु अग्निसंयोगभेदादेव भेदमाहुस्तेषामणुत्वादौ गतिश्चिन्त्या ॥

ननु स्पर्शस्य पाकजत्वे किं मानम् । नहि रूपरसादिवत्पाकोत्तरं स्पर्शान्तरमनुभूयते । न च चांडालस्पर्शनिषेधगोब्राह्मणस्पर्शविध्यनुपपत्त्या तत्सिद्धिरित्याचार्यैरुक्तं युक्तम् । तत्र स्पर्शपदस्य संयोगपरत्वात् । अन्यथा गङ्गास्पर्शविधिकर्मनाशाजलस्पर्शनिषेधानुरोधाज्जले ऽपि दीपाग्निस्पर्शनिषेधपरमेश्वरार्चितप्रदीपस्पर्शविधेरनुरोधात्तेजसि तत्सिद्ध्यापत्तेरिति चेन्न । पूर्वं काठिनस्य पाकेन कोमलतायाः पूर्वं कोमलस्य पाकेन काठिन्यस्य वानुभवसिद्धत्वेन रूपादिवत्पाकजत्वसिद्धेः । न च काठिन्यकोमलत्वे संयोगविशेषौ । चाक्षुषत्वापत्तेः । एते रूपरसगन्धस्पर्शा उद्भूतानुद्भूता द्विधा । उद्भूतत्वं जातिस्तदभावो ऽनुद्भूतत्वमिति प्राञ्चः । अनुद्भूतत्वं जातिस्तदभाव उद्भूतत्वमिति प्रामाणिकाः ॥

संख्यात्वजातिमती संख्या ॥

एकत्वद्वित्वबहुत्वभेदात्रिधा । सकलद्रव्यवृत्तिः । तत्रानपर-

गतैकत्वेनावयविन्येकत्वं जन्यते द्वित्वादौ तु विशेषः । घटद्वये चक्षुरादिसंयोगे सति तत्रायमेको ऽयमेक इत्यपेक्षाबुध्या द्वित्वोत्पत्तिरनन्तरं द्वित्वद्वित्वत्वानिर्विकल्पकं ततः सविकल्पकमनन्तरमिमौ द्वावेति प्रतीतिर्भवति । तत्र घटद्वयवृत्त्येकत्वद्वयमसमवायिकारणम् । अपेक्षाबुद्धिर्निमित्तकारणम् । द्वौ घटौ समवायिकारणम् । एवं बहुत्वेपि । अपेक्षाबुद्धिनाशात् द्वित्वादिनाशः । अत एव अपेक्षाबुद्धिः क्षणचतुष्टयस्थायिनी । अन्यथा द्वित्वविशिष्टद्रव्यप्रत्यक्षायोगात् । नञ्चिज्ञानेच्छाप्रयत्नादयस्तु द्विक्षणस्थायिन एवेति सिद्धान्तः । द्व्यणुकत्र्यणुकादिगतद्वित्वत्रित्वादेर्भगवदपेक्षाबुध्योत्पन्नस्य च निमित्तकारणादृष्टनाशान्नाशः। नन्वयमेकोयमेक इत्यादिद्वयत्रयादिविषयापेक्षाबुध्या द्वयोर्द्वित्वं त्रिषु त्रित्वमित्यादिनियमः कुत , वैपरीत्यस्य दुर्वारत्वात् । समवायिकारणादिसाम्ये कार्यवैलक्षण्यं वा कथम् । न चैकत्वद्वयं द्वित्वे त्रयं त्रित्वे हेतुरिति वाच्यम्। एकत्वे द्वित्वाद्यभावात् द्वित्वोत्पत्तेः प्राग् द्रव्येपि तदभावात् द्वित्वे द्रव्यद्वयं हेतुरित्यस्याप्यसम्भवात् । न च प्रागभावादेतद्व्यवस्थितिरित्याचार्योक्तं युक्तम् । तस्य वैलक्षण्याप्रयोजकत्वात् । अन्यथा कार्यवैलक्षण्यात्कारणवैजात्यकल्पनोच्छेदापत्तिरिति चेत्। उच्यते। केवलापेक्षाबुध्या द्वित्व द्वित्वसहितया त्रित्वं तत्सहितया चतुष्टमित्यभ्युपगमात् । द्वित्वं द्वयोरेव कुत इति चेत् । तत्रैव तत्प्रागभावसत्वादिति गृहाण ॥

परिमाणत्ववत् परिमाणम् ॥

सकलद्रव्यवृत्ति । तच्चतुर्विधम् । अणुमहद्दीर्घह्रस्वभेदात् । तत्रोत्कृष्टाणुत्वह्रस्वत्वे परमाणुमनसोर्नित्ये । अपकृष्टे द्व्यणुके । एवं महत्वदीर्घत्वे उत्कृष्टे नित्ये आकाशादौ विभुत्वशब्दवाच्ये । अपकृष्टे जन्ये तरतमभावेन त्र्यणुकादौ स्तः । बिल्वादामलकम्-

णिरिति व्यवहारस्तु अपकृष्टमहत्त्वाद्गौणः । एवं मौशोर्वीमनो ह्रस्व इत्यपि अपकृष्टदीर्घत्वाद्गौणः । तत्र द्व्यणुकपरिमाणं परमाणुद्वित्वसंख्यायोनिः । द्व्यणुकगतबहुत्वात् त्र्यणुके महत्त्वम् । घटादौ च कपालमहत्त्वम् । क्वचित् क्वचिद्बहुत्वसंख्या विलक्षणमहत्त्वे हेतुः । तूलपिण्डपरिमाणविशेषे अवयवप्रचयः कारणम् । स च प्रशिथिलः संयोगः ॥

घटः पटात्पृथगित्यनुभवसिद्धपृथक्त्वजातिमत्पृथक्त्वम् ॥

तदपि संख्यावदेव सर्वद्रव्यवृत्ति एकपृथक्त्वद्विपृथक्त्वत्रिपृथक्त्वादिभेदेन अनेकधा । अवयवगतैकपृथक्त्वादवयविन्येकपृथक्त्वमुत्पद्यते । रूपं रसात्पृथक् इति तु भिन्नत्वाद्गौणः प्रयोगः । ननु भेदेनैव घटः पटात्पृथगिति व्यवहारोपपत्तौ पृथक्त्वाख्यगुणे किं मानमिति चेत् । अत्राचार्याः । अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति व्याकरणसूत्रेण पृथक्त्ववाचकपदयोगे विधीयमानपञ्चम्यनुरोधेन तत्स्वीकारः । महाभाष्ये ऽन्येत्यर्थग्रहणमभ्युपेत्य तदर्थवाचकतरादिपदयोगेपि पञ्चमीसिद्धेस्तस्य सूत्रे प्रत्याख्यातत्वात् । भेदस्य अन्यपदार्थत्वेन विलक्षणे च तद्वाचकपदयोगाविशेषात् घटादन्यो विलक्षण इत्यादाविव घटो नेत्यत्रापि पञ्चम्यापत्तेः ॥

संयुक्तावित्यनुभवसिद्धसंयोगत्वजातिमान्संयोगः ॥

सर्वद्रव्यवृत्तिः । सत्रिविधः । अन्यतरकर्मज उभयकर्मजः संयोगजश्च । निष्क्रियस्य स्थाणोः क्रियावता पक्षिणा सहाद्यः । मल्लयोर्मेषयोर्वा द्वितीयः । अङ्गुलीतरुसंयोगात्कायतरुसंयोगोन्त्यः । सोयं संयोगो द्विनिष्ठः घटपटौ संयुक्तौ इतिप्रत्ययात् । घटे पटस्य पटे घटस्यान्य एव संयोगः । अन्यथा घटः पटसंयुक्तइतिवत् पटो घटसंयुक्त इत्यपि प्रतीत्यापत्तेः । तथा

यैकद्रव्यवर्त्येव संयोग इति मीमांसकाः ॥

घटपटौ विभक्ताविति प्रतीतिसिद्धविभागत्वजातिमान् विभागः ॥

सर्वद्रव्यवृत्तिः संयोगजः । द्विपदादिध्यौ । विभक्ताविति प्रयोगस्तु संयोगाभावयोगात् गौणः । शेषं पूर्ववत् ॥

परत्वत्वजातिमत् परत्वम् ॥

तत् द्विविधं कालिकं दैशिकं चेति । आद्यं जन्यद्रव्ये एव । द्वितीयं मूर्ते एव । इयत्तावच्छिन्नपरिमाणं मूर्तत्वमुच्यते तदाश्रयो मूर्तम् । तथाहि । युवस्थविरपिण्डयोरयमस्माद्बहुतरतपनपरिस्पन्दाश्रयो ऽयमस्मादल्पतरतपनपरिस्पन्दाश्रय इति बुद्ध्या परत्वापरत्वे जन्येते । तदीयेव अयमस्मात्पर इति अयमस्मादपर इति चौच्यते । एतदेव ज्येष्ठत्वं कनिष्ठत्वं च । तत्र तपनक्रियायाः पुरुषे सम्बन्धघटको महाकालोऽभ्युपेयते । एवं व्यवहितसन्निकृष्टयोः पिण्डयोरयमस्मात्स्वल्पतरसंयुक्तसंयोगवान् अयमस्माद्बहुतरसंयुक्तसंयोगवानिति ज्ञानात् दैशिकपरत्वापरत्वे जन्येते तयोरेवायमपरोऽयं पर इति चौच्यते । तत्र तावत् देशसंयोगसङ्कामिका महादिगभ्युपेयते ॥

गुरुत्वत्वजातिमद्गुरुत्वम् । आद्यपतनासाधारणकारणम् ॥

पृथिवीजलवृत्ति । अतीन्द्रियं पतनानुमेयमित्युदयनाचार्याः । अधोदेशावच्छेदेन प्रत्यक्षमेव तदिति लीलावतीकारः ॥

· द्रवत्वत्वजातिमत् द्रवत्वम् ॥

पृथिव्यादित्रयवृत्ति । द्विविधं सांसिद्धिकं नैमित्तिकं च । तत्र स्वाभाविकं जले करकादौ चादृष्टवशात् घनीभावात्प्रतिबन्धकमात्रं वस्तुतोऽस्त्येव तस्योपलम्भात् । लाक्षासुवर्णादावग्निसंयोगनिमित्तज्जायमानमन्त्यम् ॥

स्नेहः सङ्ग्रहरूपकार्यानुमेयो गुणः ॥

जलमात्रवृत्तिः । घृततैलादावुपष्टम्भकजलभागतः ॥

बुद्धित्वजातिमती बुद्धिः ॥

सा द्विधा स्मृतिरनुभवश्च ॥

स्मरामीत्यनुभवसिद्धस्मृतित्वजातिमती स्मृतिः ॥

सा च पूर्वानुभवजन्यसंस्कारजा इति वक्ष्यते ॥

अनुभवामीत्यनुभवसिद्धजातिविशेषोऽनुभवत्वमित्येके ॥ अनुमित्यादौ अनुभवामीत्यप्रतीतेः प्रत्यक्ष एव । तथानुभवाच्चानुभवसिद्धमनुभवत्वं प्रत्यक्षस्यैवेत्यपरे । प्रकृते तु स्मृतिभिन्नज्ञानत्वमेवानुभवत्वमिति ॥ सेयं बुद्धिर्द्विधा मिथ्या प्रमा च ॥

असद्विषयणी मिथ्या ॥

शुक्ताविदं रजतमिति बुद्धौ शुक्तिरजतत्वयोः प्रसिद्धयोरलीकस्यैव समवायस्य विषयीकरणादिति वाचस्पतिमिश्राः । आचार्यपादास्तु । असतो भानासम्भवाच्छुक्तौ प्रसिद्धरजतत्वस्यैव तत्समवायस्याप्यारोप एव । अलीकं न भासत इत्याद्विषयत्वेऽपि सचेतसां प्रकृतेवोचितेत्याहुः । तन्मते विशेष्याऽसम्बद्धविशेषणविषयकत्वं मिथ्यात्वम् ॥ घटे रूपमित्यस्य वारणाय विशेष्यावृत्तीति नोक्तम् । असम्बद्धत्वं तु तत्र नास्तीति नातिव्याप्तिः । सा त्रिधा संशयविपर्ययतर्कभेदात् । एकस्मिन्धर्मिणि विरुद्धनानार्थावमर्शः संशयः । यथा स्थाणौ स्थाणुर्वा पुरुषो वायमिति । अत्र पुरुषत्वं तत्सम्बन्धश्च तत्र नास्तीति प्रत्यसद्विषयत्वम् । स चायं त्रिधा साधारणधर्मदर्शनजोऽसाधारणधर्मदर्शनजो विप्रतिपत्तिजश्च । स्थाणुपुरुषसाधारणोच्चत्वदर्शनज आद्य उक्तः । नित्योऽनित्येभ्यो व्यावृत्तशब्द-

त्वादिदर्शनजः शब्दो नित्यो अनित्यो वेति द्वितीयः। वादिवि-रुद्धार्थकवाक्याज्जायमानस्तमो द्रव्यं न वेत्यादिस्तृतीयः॥

प्रतियोगिव्यधिकरणतदभाववति तत्प्रकारको निर्णयो वि-पर्ययः॥

यथा शुक्ताविदं रजतमिति रजतत्वाभाववत्यां शुक्तौ त-न्निर्णयोयं भवत्येव। अयं वृक्षः कपिसंयोगीति मूलावच्छेदेन कपिसंयोगाभाववति वृक्षे कपिसंयोगप्रकारकस्य निश्चयस्य सत्वादयमपि विपर्ययः स्यात्तद्वारणाय प्रतियोगिव्यधिकरणे-ति। संयोगाभावो हि प्रतियोगिसमानाधिकरणो न प्रतियोगि-व्यधिकरणः, शाखावच्छेदेन कपिसंयोगसत्त्वेपि मूलावच्छेदेन कपिसंयोगाभावस्य विद्यमानत्वात्॥

व्याप्यारोपप्रयुक्तो व्यापकारोपस्तर्कः॥

यथा यदि निर्वह्निः स्यान्निर्धूमः स्यादिति। वन्ह्यभावो व्याप्यस्तदारोपप्रयुक्तो व्यापकधूमाऽभावारोपोत्रास्ति। स्वप्न-स्तु संशयविपर्ययात्मकं स्मरणमेव दोषवशात्तदिति स्थाने इदमिति नैयायिकाः। वैशेषिकास्तु तर्कस्याहार्यविपर्ययात्म-कत्वान्न पृथक् गणयन्तः संशयविपर्ययस्वप्नानध्यवसायभे-देनाविद्या चतुर्द्धेत्याहुः। निद्रामनःसंयोगजं ज्ञानं स्वप्नः। अविदितचरपदार्थदर्शनात्किमेतदितिधीरनध्यवसायः। न चायं संशयः, नानाकोट्यनुल्लेखात्॥

प्रमा च यथार्थानुभवः॥ अबाधितार्थविषयं ज्ञानं यथा-र्थम्॥ स्वविषयसम्बन्धेन विशेषणवद् विशेष्यविषयकमित्यर्थः। तथा च रक्तः पट इति परम्परया प्रमा, न समवायेन। सा च प्रमा प्रत्यक्षात्मिकैवेति चार्वाकाः। अनुमितिरपीति कणाद-सुगतौ। उपमितिरपीति न्यायैकदेशिनः। शब्दोपीति नैयायि-

काः । अर्थापत्तिरपीति प्रभाकरः । अनुपलब्धिरपीति भाट्टा वेदान्तिनश्च । सम्भवैतिह्यरूपापीति पौराणिकाः । चेष्टापीति तान्त्रिकाः ॥

एतादृशप्रमाकरण च प्रमाणम् ॥

करणत्वं चासाधारणकारणत्वम् ॥ असाधारणत्वं च व्यापारवत्त्वम् । तथा च चक्षुरादिकमेव प्रत्यक्षे करणमित्येके । आचार्यास्तु अव्यवधानेन कार्योत्पादकत्वमसाधारणत्वम् । तथाच चक्षुसंयोगादिकमेव प्रत्यक्षे करण, लिङ्गपरामर्शरूपं तृतीयं ज्ञानमेवानुमितावित्याहुः ॥

कारणत्वं चानन्यथासिद्धनियतपूर्ववृत्तित्वम् ॥

यथा घटे मृद्दादेः । दैवादागतस्य रासभस्य तन्तुरूपस्य च वारणाय क्रमेण पदद्वयमिति प्राञ्चः । वस्तुतस्तु नियतपदं न देयमेव रूपवद्रासभस्याप्यन्यथासिद्धत्वेनैव वारणात् । अनन्यथासिद्धस्य चावश्यकल्प्यमानपूर्ववर्त्तिन एव कार्यसम्भवे तत्सहचरितत्व, रासभसत्त्वेपि दण्डचक्रादेरावश्यकत्वात्तैरयमन्यथासिद्ध एवेति तत्त्वम् । तथा च प्रमाकरणं चार्वाकमते एकं, वैशेषिकाणां द्वयमित्यादि सिध्यति । तथाहि । साक्षात्करोमीति प्रतीतिसाक्षिकजातिविशेषवत् ज्ञानं प्रत्यक्षन्तत् द्विधा नित्यमनित्यं च । नित्यं भगवतः तत्सर्वविषयं प्रमा च । अनित्यं च जीवानाम् । तत् द्विधा सविकल्पकं निर्विकल्पकं च ॥

अयं घटोऽयं दण्डीत्यादिशब्दाभिलापयोग्यं विशेषणविशेष्यवैशिष्ट्यावगाहि वा सविकल्पकम् ॥

तत्कारणत्वेन कल्प्यमतीन्द्रियं विशिष्टशब्दाभिलापयोग्य विशेषणविशेष्यवैशिष्ट्यानवगाह्यन्त्यम् ॥

तद्यथा । दण्डी पुरुष इति ज्ञाने दण्डो विशेषण पुरुषो

यात् सुखसमवेतसुखत्वादिग्रहे संयुक्तसमवेतसमवायः । एवं घटादिग्रहे चक्षुषः स्पार्शनस्य वा संयोगः । रूपादौ संयुक्तसमवायः । रूपत्वादौ संयुक्तसमवेतसमवायः द्रष्टव्यः । द्रव्यप्रत्यक्षमात्रे इन्द्रियसंयोगस्य शब्देतरद्रव्यसमवेतग्रहे संयुक्तसमवायस्य तत्समवेतग्रहे तृतीयस्य हेतुत्वस्य सामान्यतः स्वीकारात् । ननु चक्षुषो गोलकविशेषरूपस्य घटादिसंयोगे प्रत्यक्षबाधितः कथमासत्तिरिति चेन्न । तत्तद्गोलकाधिष्ठितानामिन्द्रियाणामतीन्द्रियाणामभ्युपगमात् गोलकादिरूपत्वे वा ऽसम्बद्धग्राहकत्वमभ्युपेयम् । तथा च पृष्ठभागीयाः पुरोवर्तिनो भित्त्यादिव्यवहिताश्च पदार्था गृह्येरन् । व्यवधानं प्रतिबन्धकमिति चेन्न । भित्त्यादिपरभागस्थितानां परावृत्य दर्शने पृष्ठदेशे स्थस्य च प्रत्यक्षं न स्यात् । तत्पुरुषीयतत्कालीनप्रत्यक्षं प्रत्येव तत्कालप्रतिबन्धकत्वकल्पने चातिगौरवात् । तस्मादावश्यकमतीन्द्रियमिन्द्रियम् । नन्वेवं शाखाचन्द्रमसोस्तुल्यकालग्रहणं न स्यात् । किं च नेत्रोन्मीलने महदाद्यवधिमूर्धचन्द्रग्रहणार्थं विलम्बापत्तिः । चक्षुषस्तावत् दूरगमनकल्पनात् इति चेन्न । अतिलाघवादतिशीघ्रं तावत् दूरगमनाद्विशेषाऽग्रहणस्याशु तदुत्पादकप्रतीतेश्चोपपत्तेः । तदुक्तम् । अचिन्त्यो हि तेजसो लाघवातिशयेन वेगातिशयो यत्प्राचीनाचलचूडावलम्बिन्येव भगवति मयूखमालिनि भुवनोदरेष्वालोकइत्यभिमानो लौकिकानामिति दिक् ॥ समवायेन शब्दग्रहः श्रोत्रे शब्दसमवायस्य सत्त्वात् । शब्दत्वादिग्रहे समवेतसमवाय । विशेषणतया अभावग्रहः । शब्दो नास्तीति श्रोत्रे शब्दाभावस्य विशेषणतास्त्येव । भूतले रूपादौ च घटाभावग्रहे चक्षुःसंयुक्तविशेषणता चक्षुःसंयुक्तसमवेतविशेषणता चेत्यादि द्रष्टव्यम् ॥ कवेः काव्यरचनामूलभूते विशिष्टज्ञाने

मनसा जायमाने त्रिकालितपदार्थस्मरणरूपं ज्ञाने सन्निकर्षः । अन्यथा तत्र सन्निकर्षाभावेनातीन्द्रियातीतानागतपदार्थवैशिष्ट्याज्ञानासम्भवात् । घटत्वसामान्यलक्षणप्रत्यासत्त्या ऽनागतव्यवहितसकलज्ञानोत्पत्तौ सामान्य प्रत्यासत्तिः । अन्यथा एतादृशो घटपदवाच्य इत्येकत्र बोधिते सर्वत्र घटे तद्ग्रहो न स्यात् । क्षणमात्रमुपिस्तथौ सुप्तमीन इव हृदइत्याद्यभियुक्तोक्त्या योगिभिः सर्वसाक्षात्कारे तत्रात्यन्तयोगाभ्यासेन जातो ऽदृष्टविशेष एव योगजधर्म इत्युच्यते ॥

अथानुमानन्निरूप्यते ॥

अनुमिनोमीत्यनुभवसाक्षिकजातिविशेषवत्यनुमितिः ॥

तत्करणमनुमानम् ॥ तच्च ज्ञायमानं लिङ्गमिति प्राञ्चः । तथाहि । यद्धर्मावच्छिन्नसमानाधिकरणा यावन्तो यत्साध्यतावच्छेदकविशिष्टसमानाधिकरणास्तत्साध्यसाधनाधिकरणव्याप्तिः । तदाश्रयो धूमादि लिङ्गं तस्मिन् लिङ्गे यत्र धूमस्तत्र सर्वत्र वन्हिरिति भूयो दर्शनात् धूमत्वावच्छिन्नधूमसमानाधिकरणाः सर्वे महानसत्वादयो वन्हित्वावच्छिन्नवन्हिसमानाधिकरणास्तादृशवन्हिसमानाधिकरणे धूम इति व्याप्तिज्ञानं प्रथमं जायते ततो ऽपूर्वपर्वतादौ धूमदर्शनात् द्वितीयं ज्ञानं जायते ततो वन्हिव्याप्यधूमवानयमिति तृतीयं ज्ञानमुत्पद्यते तदेव लिङ्गपरामर्शः । तत्र लिङ्गपरामर्शत्वेन परामृश्यमाणलिङ्गत्वेन वा करणतेत्यत्र विनिगमकाभावादुभयमपि द्वारद्वारिभावेन हेतुः । लिङ्ग करणं परामर्शो द्वारं व्याप्तिज्ञान तु परामर्शे विशेषणज्ञानत्वेनोपयुज्यते । ततोयं पर्वतो वन्हिमानिति साध्यवन्हिविशिष्टज्ञानरूपानुमितिर्भवतीति । मणिकारास्तु अतीतानागतलिङ्गेनाप्यनुमितिदर्शनात् न लिङ्गस्य करणत्वं किं तु व्याप्तिज्ञानं करणं

परामर्शो व्यापार इत्याहुः । स्मरणात्मकपरामर्शादसन्निकृष्टहेतुकेऽप्यनुमितौ तत्र व्याप्तिज्ञानस्य पूर्वपरामर्शतज्जन्यसंस्कारैर्व्यवधानान्न करणत्वं सम्भवतीति व्याप्तिज्ञानस्य संस्कारसाधारणपरामर्शजनकत्वेनैवानुमितिकरणतेति नव्याः । जनकत्वं हि कारणत्वं तच्चानन्यथासिद्धनियतपूर्ववर्तित्वं च प्रागभावावच्छिन्नसमवायिवृत्तित्वमतिगौरवग्रस्तमिति न तेन रूपेण करणता किं तु मन एवानुमितिकरणं परामर्शो व्यापारः । उक्तं च प्रमेयभाष्ये स्मृत्यनुमित्यादिकरणत्वेन मनः साधितमिति नव्यतराः । ज्ञानत्वेनैवानुमितिकरणता परामर्शो विशेषकारणमिति नातिप्रसङ्ग इत्यपि केचित् । न च व्याप्तिग्रहे सति महानसएवानुमीयताम् वह्निव्याप्यधूमवानयमिति परामर्शस्य तथापि सम्भवादिति वाच्यम् । पक्षताया अप्यनुमितिहेतुत्वात् ॥

अनुमितीच्छाभावविशिष्टसाध्यनिर्णयाभावो हि पक्षता ॥

महानसादौ चानुमितीच्छाविरहसहित एव साध्यनिर्णयोऽस्तीति न पक्षता । तत्रैवानुमितिर्भवत्वितीच्छायां पक्षतासम्पत्तये अनुमितीच्छाभावविशिष्टेति विशेषणम् । तथा च पुरुषे सत्यपि दण्डाभावाद्दण्डिपुरुषाभाववत्साध्यनिर्णये सत्यपि इच्छाविरहरूपविशेषणाभावाद्विशिष्टनिर्णयाभावरूपा पक्षता भवति । साध्यसन्देहः पक्षता । तदुक्तं भाष्ये । नानुपलब्धेऽर्थे न निर्णीतेऽर्थे न्यायः प्रवर्तते अपि तु सन्दिग्धे इति मते च तत्रानुमितिर्न स्यादिति । तन्न युक्तम् । अकस्माद् घनगर्जितेन मेघानुमानात्सन्देहाभावेऽपि अनुमितिदर्शनात् । न च धूमो वह्निव्याप्यो धूमवान् पर्वत इति ज्ञानद्वयमेव हेतुरस्तु कृतं परामर्शेणेति मीमांसककन्दलीकारयोर्मतं युक्तम् । धूमो वह्निव्याप्य आलोकवान्पर्वत इति ज्ञानादप्यनुमित्यापत्तेः ।

धूमे व्याप्तेरालोके पक्षधर्मतायाश्च ज्ञानस्य सत्त्वात् । न चैकत्र हेतौ तदुभयावगाहि ज्ञानं कारणमिति वाच्यम् । धूमो वन्हिव्याप्यो द्रव्यवान् पर्वत इति ज्ञानादप्यनुमित्यापत्तेः । द्रव्यत्वेन धूमस्यैव पक्षवृत्तित्वभानात् । न चैकेन धूमत्वरूपेण व्याप्तिपक्षधर्मताज्ञाने हेतुः । वन्हिव्याप्यधूमवान् पर्वत इत्याप्तवाक्यजपरामर्शात् अनुमित्यनापत्तेः । तस्मात्परामर्श एवात्रहेतुः । सोयं परामर्शो व्याप्तिज्ञानक्रमेण यत्र स्वस्यैवोत्पन्नस्तत्रानुमितिरपि स्वस्यैव भवति, तदेव स्वार्थानुमानम् । यत्र तु स्वयं बुध्वा शब्देन परं बोधयति, तत्परार्थानुमानम् । तत्र प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्याः पञ्चावयवाः । तत्र पर्वतो वन्हिमानिति साध्यविशिष्टपक्षबोधकं वचनं प्रतिज्ञा कुत इत्याकांक्षाशामकं धूमादिति पञ्चम्यन्तं लिङ्गवचनं हेतुः धूमो ऽस्तु वन्हिर्मास्त्वित्याशङ्काशामकं यत्र धूमस्तत्राग्निर्यथा महानस इत्यादि सव्याप्तिकं दृष्टान्तवचनमुदाहरणं, हेतूदाहरणाभ्यां पर्यवसितव्याप्तिविशिष्टपरामर्शजनकं तथा चायं, वन्हिव्याप्यधूमवानयमिति वा उपनयः । पक्षे साध्योपसंहाररूपं तस्मात्तथेति वाक्यं निगमनम् । एतएव प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायशब्देन वैशेषिकैरुच्यन्ते । अपदेशो हेतुः । शेषं क्रमेण ज्ञेयम् । मीमांसकास्तु त्रय एवावयवाः प्रयोज्याः उदाहरणान्तास्तदाद्या वा इत्याहुः । न च परार्थानुमाने शाब्दबोधात्मक एव साध्यनिर्णयो नानुमितिरिति वाच्यम् । वादिवाक्यस्याप्रामाण्यशङ्कास्कन्दितत्वेन निर्णयाजनकत्वात् पञ्चावयवपूर्त्यनन्तरं मनसा बाधकाऽभावप्रतिसन्धाने सति वादिकारितव्याप्तिज्ञानादिवशान्मानसपरामर्शोत्तरमनुमित्यभ्युपगमात् इति दिक् । तदिदं लिङ्गं त्रिधा केवलान्वयिकेवलव्यतिरेक्यन्वय-

व्यतिरेकिभेदात् । तत्र वृत्तिमदत्यन्ताभावाप्रतियोगिसाध्यसाधको हेतुः केवलान्वयी । यथेदं वाच्यं ज्ञेयत्वात् द्रव्यवदित्यादि । अनवगतसाध्यसाधनसहचारो हेतुः केवलव्यतिरेकी । यथा आकाशः पृथिव्यादिसर्वेभ्यो भिद्यते शब्दवत्त्वादिति । अत्र शब्दस्य पृथिव्यादिसाहचर्यं न क्वापि दृष्टं किं तु यत्रेतरत्वं तत्र शब्दो नास्तीतीतरभेदाभावशब्दाभावयोरेव सामानाधिकरण्यमवगतमतो व्यतिरेकयोः साध्याभावहेत्वभावयोरेव व्याप्तिग्रहात् केवलव्यतिरेकी । न च शब्दे हेतौ व्याप्त्यग्रहादितरभेदव्याप्यशब्दवानयमिति परामर्शासम्भवेन कथमनुमितिरिति वाच्यम् । ययोरभावयोर्व्याप्तिर्विना बाधकं तयोरपीति तर्कसहकृतमनसा हेतावपि साध्यव्याप्तिग्रहेण परामर्शसम्भवात् । यद्वा साध्याभावव्यापकीभूताभावप्रतियोगिहेतुमानयमित्येव व्यतिरेकिणि परामर्शस्ततोऽनुमितिरिति । यत्र साध्यहेत्वोस्तदभावयोश्च व्याप्तिर्गृह्यते सोऽन्वयव्यतिरेकी । यथा यत्र धूमस्तत्राग्निः यत्र वह्न्यभावस्तत्र धूमाभाव इति उभयत्र सहचारग्रहाद्धूमसहचरिताः सर्वे वह्निसहचरिता वह्न्यभावसहचरिताः सर्वे धूमाभावसहचरिता इति ग्रहाद्धूमादेः तत् । व्याप्तिबोधनप्रकारस्तु प्राचीनैरुक्तः । 'अन्वयेन साधनं व्याप्यं साध्यं व्यापकमिष्यते । साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः ॥ व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम् । एवं परीक्षिता व्याप्तिः स्फुटीभवति तत्त्वतः' इति । तत्रान्वयव्यतिरेकिणि पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति पञ्च रूपाणि अपेक्षितानि । केवलव्यतिरेकिणि सपक्षाभावात्तद्भिन्नानि चत्वारि । केवलान्वयिनि विपक्षाभावाद्विपक्षव्यावृत्तिभिन्नानि चत्वारि । तत्र पक्षतावान् पक्षः पर्वतादिः । निर्णीतसाध्यहेतुसह-

कभत्वात् सर्वेपि स्वातन्त्र्येण दूषणानि। तेन क चित् क चित्तस्मिल्लनेपि नैकेनापराऽन्यथासिद्धिः शङ्क्या। व्यभिचारोऽसाधकत्वेन परम्परोपयोगान्न हेत्वाभासान्तरम् उपाधिः। यद्धर्मविशिष्टसाध्यव्यापकत्वं तद्धर्मविशिष्टसाधनाव्यापकत्वं च तल्लक्षणम्। अस्तीदं धूमवान् वन्हेरित्यत्रार्द्रेन्धने। भवति हि द्रव्यत्वविशिष्टो यत्र यत्र धूमस्तत्र तत्रार्द्रेन्धनम्, द्रव्यत्वविशिष्टो यत्र यत्र वन्हिस्तत्र तत्रास्तीति द्रव्यत्वविशिष्टसाध्यव्यापकं तद्विशिष्टसाधनाव्यापकं च। एवं गर्भस्थो मित्रातनयः श्यामः मित्रातनयत्वात् पूर्वोत्पन्नवदित्यत्र शाकपाकजत्वमुपाधिः। अत्रापि मनुष्यत्वावच्छिन्नं यत्र यत्र श्यामत्वं तत्र तत्र शाकपाकजत्वम्। मनुष्यत्वावच्छिन्नं यत्र यत्र मित्रातनयत्वं तत्र तत्र शाकपाकजत्वं नास्तीति भवति लक्षणसमन्वयः। एवं वायुः प्रत्यक्षः प्रमेयत्वादित्यत्रापि बहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकं तदवच्छिन्नसाधनाव्यापकमुद्भूतरूपवत्त्वमुपाधिरित्यधिकं पल्लवेन। नन्वनुमानं न प्रमाणं नाप्यनुमितिः प्रमान्तरम्। यत्र धूमस्तत्राग्निरिति बहुशो दर्शनात् धूमवतानेन पर्वतेन प्रायेण वन्हिमता भाव्यमिति सम्भावनात् एवानुमितिकार्यनिर्वाहादिति चेन्न। वन्हिमनुमिनोमीत्यनुभूयमानजातिविशेषस्य तदाश्रयानुमितेस्तत्कारणत्वेनानुभूयमानपरामर्शस्य चापलपितुमशक्यत्वादिति तत्रैव प्रवृत्त्या विषयलाभे सति जात ज्ञानं प्रमेति प्रमात्वग्रहाच्च विना बाधकं तदन्यथात्वस्य कल्पयितुमशक्यत्वादिति दिक्॥ इत्यनुमानम्॥

उपमिनोमीत्यनुभवसिद्धजातिविशेषवत्युपमितिः, तत्करणमुपमानम्॥

तत्त्रिधा। सादृश्यविशिष्टपिण्डज्ञानं वैधर्म्यविशिष्टपिण्डज्ञा-

नमसाधारणधर्मविशिष्टपिण्डज्ञानं च । तद्यथा । गवयादिशब्दाः क्वचिच्छक्ता इति जानता कीदृग्गवय इत्यारण्यके पृष्टे, गोसदृशो गवय इति तेन निवेदिते कालान्तरे ऽरण्यं गतस्य तत्पिण्डदर्शनाद्गोसदृशोयं पिण्ड एतादृशश्च गवयशब्दार्थ इत्याप्तेनोक्तं स्मरतस्तस्मादयं गवयशब्दवाच्य इति उपमितिर्जायते । तत्र गोसदृशोयं पिण्ड इति सादृश्यविशिष्टपिण्डज्ञानं करणम् । वाक्यार्थस्मरणमवान्तरव्यापार । उपमितिः फलम् । एवं कीदृशो ऽश्व इति पृष्टे गवादिवद् द्विशफः स्वल्पपुच्छश्च नेत्याप्तोक्त्यनन्तरं तत्पिण्डदर्शनादयं द्विशफः स्वल्पपुच्छश्च नेति ज्ञानादाप्तवाक्यार्थस्मरणोत्तरमयमश्वशब्दवाच्य इत्युपमितिज्ञानमुत्पद्यते । तत्र वैधर्म्यविशिष्टपिण्डज्ञानं करणं, वाक्यार्थस्मरणं व्यापारः, शक्तिज्ञानं फलम् । एवं कीदृश उष्ट्र इति प्रश्ने कण्टकाशी अतिदीर्घग्रीव इत्याप्तवाक्यश्रवणानन्तरं कालान्तरे तद्धर्मविशिष्टपिण्डदर्शनाद्वाक्यार्थस्मरणे सति उष्ट्रशब्दवाच्योयमिति वाच्यवाचकभावग्रहो भवति सोपमितिः फलम् । असाधारणधर्मविशिष्टधर्मिप्रत्यक्षं करणं वाक्यार्थस्मरणं व्यापार इति वाच्यम् । एवं कीदृश्योषधी सर्पविषहन्त्रीति प्रश्ने नकुलदंष्ट्राधृतेत्याप्तोच्चरिते कालान्तरे नकुलदंष्ट्रायामौषधिविशेषदर्शने सति एतादृशी सर्पविषहन्त्रीति ज्ञानमुत्पद्यते । तत्रैतादृशी विषहन्त्रीति ज्ञानं फलम् । वाक्यार्थस्मरणमवान्तरव्यापारः । नकुलदंष्ट्राधरणरूपाऽसाधारणधर्मविशिष्टपिण्डज्ञानं करणमित्यूह्यम् । एवं चोपमानस्यावच्छेदेन न शक्तिग्राहकत्वमिति प्रतारणं परास्तम् । न चाप्तवाक्यस्मरणाच्छाब्दबोध एवास्तु कुतः पृथगुपमानाभ्युपगम इति वाच्यम् । शरीरत्वपञ्चत्वोद्भूतत्वादिजातिविशेषरूपेण शब्दाच्छाब्दबोधाऽसम्भवात् सादृश्यमवच्छेदकी-

कृत्यत्र बोधकत्वात् उपमिनोमीत्यनुव्यवसायादिति नैयायिकाः । वैशेषिकास्तु । अयं गवयशब्दवाच्यः गोसदृशत्वात् इत्यनुमानात्तद्ग्रहः । आप्तवचनाच्च तथाव्याप्तिग्रहात् । उपमिनोमीत्यनुव्यवसायस्य सन्दिग्धः, सत्त्वे वा ऽनुमितित्वव्याप्तमेव तद्स्तु । तथा च न पृथक् प्रमाणमित्याहुः ॥

शब्दात्प्रत्येमीत्यनुभवसिद्धा शाब्दत्वजातिमती शाब्दी, तत्करणं शब्दः प्रमाणम् । तथाहि । घटं नय पटमानयेत्यादिप्रयोज्यप्रयोजकवाक्यं शृण्वतो बालस्याऽऽवापोद्वापाभ्यां घटपटादिव्यवहारं पश्यतस्तद्व्यवहारेण तदीयं ज्ञानमनुमिन्वतस्तज्जनकत्वेनान्वयव्यतिरेकाभ्यां शब्दमवगच्छतो ऽसम्बद्धस्याबोधकत्वादसम्बन्धोऽस्तीति अनुमितिर्भवति । स च सम्बन्धः शक्तिरुच्यते । एवमुपमानात्कोशादिभ्यस्तदनन्तरमन्यत्रापि तद्ग्रहः । एवं घटादिपदशक्तिग्रहे सति गृहीतशक्तिकपदात् पदार्थोपस्थितावाकांक्षायोग्यतादिसहकारिवशाच्छाब्दप्रमा जायते । सा फलम् । पदान्येव ज्ञायमानानि करणानि पदज्ञानं वा करणं पूर्ववत् पदजन्यपदार्थोपस्थितिरवान्तरव्यापार इत्यूह्यम् । ननु गवादिपदानां वृद्धव्यवहारेण सन्निहिते गवि शक्तिग्रहेऽपि देशान्तरीयाऽपूर्वगोबोधः कथं, तत्र शक्त्यग्रहात् । अन्यथा गोशब्दादश्वबोधापत्तिरिति चेन्न । सामान्यलक्षणप्रत्यासत्त्या सकलगोव्यक्तेः शक्तिग्रहसमये चोपस्थितौ सर्वत्रैकजात्यादिविशिष्टे तद्ग्रहेणादोषात् । तथा च न्यायसूत्रम् । व्यक्त्याकृतिजातयस्तु पदार्थ इति । एकवचनेन जात्यादिविशिष्टे शक्त्यैक्यं सूचयति । मीमांसकास्तु गोत्वे एव शक्तिः तदाश्रयत्वेन लक्षणया व्यक्तिबोध इत्याहुः । गव्येव शक्तिस्तु गोत्वेऽपि गौरवात् नापि गोत्वे एव शक्तिर्गवि लक्षणेति युक्तम् । गामानयेत्यत्रैव वृत्तिद्वयकल्पने गौ-

त्वात् । न चैवं गोपदात् गोत्वबोधो न स्यादिति वाच्यम् । अकार्यत्वेऽपि घटत्वस्य कार्यतावच्छेदकत्वात् कार्यत्वसम्बन्धेन दण्डात् घटोपस्थितौ घटत्वभानवदशक्यत्वेऽपि शक्यतावच्छेदकत्वात् शब्दादुपस्थितिसम्भवादिति वैयाकरणाः । नन्वेवमपि गौः शुक्लेत्यादौ पदार्थयोरभेदरूपान्वयो न बुध्येत तत्र शक्त्यभावात् अशक्यस्याप्युपस्थितौ घटादेरपि तत्र बुध्येतेति चेदसत्यम् । अशक्यस्यान्वयस्याकांक्षायोग्यतावशात् भानसम्भवात् । तथाहि । यत्पदं यत्पदार्थेन सह यादृशान्वयबोधजनकम् तत्पदस्य तेन समभिव्याहारस्तादृशबोधे आकांक्षा । घटादिपदं विरुद्धविभक्तिरहितं प्रातिपदिकार्थेन सहाभेदान्वयमेव बोधयति द्वितीयाद्यर्थकर्मत्वादिभिः सह निरूप्यनिरूपकत्वमाश्रयाश्रयिभावं वा अतस्तादृशपदसमभिव्याहारो भवत्याकांक्षा । एतज्ज्ञानञ्च कारणं घटपदं द्वितीयाद्यर्थेन सह स्वार्थाभेदान्वयबोधकमिति ज्ञानवतो वैयाकरणस्य तथा च बोधात् अन्यस्याभावाच्च । एवम् ॥

योग्यता एकपदार्थे अपरपदार्थस्य प्रकृतसंसर्गवत्त्वम् । तेन पयसा सिञ्चतीति योग्यम् । पयसि सेककरणतासत्त्वात् वह्निना सिञ्चतीति न योग्यं तत्र सेककरणत्वाभावात् । देवदत्तो गौरित्यत्र देवदत्ते स्वस्वामित्वरूपसम्बन्धसत्त्वाद्योग्यतापत्तेः प्रकृतेत्युक्तम् । तथा च प्रकृतवाक्ये यः प्रतिपाद्यः सम्बन्धः स्तद्वत्त्वमित्यर्थः । स चात्राभेदः स च नास्तीति न तद्योग्यम् । एवमासत्तिः पदजन्यपदार्थोपस्थितिरेव । अतः प्रत्यक्षेण तन्दुलदर्शनात् पचतीत्येवोक्ते तण्डुलं पचतीति न बोधः । पदाव्यवधानमासत्तिरिति प्राचीनमतं न युक्तम् । गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यत्र योजनयान्वयबोधानापत्तेः । योजनावाक्यादेरा-

न्वयबोध इति चेन्न । प्रथमवाक्यस्याबोधकत्वप्रसङ्गात् । योज-
नावाक्यं च तात्पर्यग्राहकत्वेन प्रकरणादिवदुपयुज्यते । एवं चा-
काङ्क्षायोग्यतासंनिधिवशात् पदार्थानां परस्परविशेषणविशेष्यभाव-
गाहिविशिष्टशब्दबोधसम्भवान्नानुपपत्तिरिति दिक् ॥

मीमांसकास्तु कार्यान्विते पदानां शक्तिः । तथाहि । प्रयोज्य-
प्रयोजकयोरानयनानयनादिव्यवहारौ पश्यतो बालस्यानयनानय-
नादि कार्यत्वेन ज्ञात्वा ऽहं प्रवर्ते एवमयमपि तथात्वेन ज्ञात्वा
प्रवृत्तस्तज्ज्ञानं च शब्दादिति शब्दस्तद्विशिष्टे शक्त इति प्रथमश-
क्तिग्रहात् । तथा च कार्यतासामान्यस्य सर्वशब्दादवगमेऽपि वि-
शेषतस्तदुपस्थितिं विना बोधपर्यवसानाभावादबोधकत्वमेव त-
च्छून्यानामर्थवादवाक्यवेदान्तवाक्यानामित्याहुः ॥

वेदान्तिनस्तु । अन्विते पदानां शक्तिरित्यन्वयांशबोधोपप-
त्तिर्न तु कार्यत्वांशे सर्वपदानां शक्तिस्तस्य विशेषतस्तद्बोधकप-
दादेवोपस्थितिसम्भवेन व्यर्थगौरवप्रसङ्गात् । अतः कार्यत्वांशं
विनापि मोक्षरूपमहाप्रयोजनवदात्मस्वरूपबोधकत्वाद्वेदान्ताः प्र-
माणमित्याहुः ॥

पदानां पदार्थेष्विव वाक्यस्य संसर्गरूपेऽन्वये शक्तिः । अत
एव तस्य वाक्यार्थ इति किंवदन्ती सङ्गच्छत इति वैयाकरणाः ॥
व्युत्पादितं चास्माभिर्मतान्तरनिराकरणपूर्वकमेतन्मतं वैयाकर-
णभूषणे । नन्वेवमपि गङ्गायां घोष इत्यत्र गङ्गापदात्तीरप्रत्ययः
कथं, तत्र गङ्गापदशक्तेरभावादिति चेत् । सत्यम् । लक्षणारूपवृ-
त्त्यन्तरात्तदुपस्थितेः ॥

अथ केयं लक्षणा । उच्यते । शक्यसम्बन्धो लक्षणा । गङ्गा-
पदशक्यो गङ्गाप्रवाहस्तत्सम्बन्धस्तीरेऽस्त्येव । तथा च स्वशक्य-
प्रवाहसंयोगरूपसम्बन्धेन गङ्गापदात्तीरोपस्थितिः । स्वशक्येन

सह नियमरूपाव्याप्तिरेव लक्षणा ॥ तदुक्तम् । 'अभिधेयाविनाभूते प्रवृत्तिर्लक्षणोच्यते' इति मीमांसकाः । तन्न । मञ्चाः क्रोशन्तीत्यत्र मञ्चपदस्य मञ्चस्थपुरुषे लक्षणा न स्यात् । मञ्चपुरुषयोर्व्याप्त्यभावात् । एवं यष्टीः प्रवेशयेत्यत्रापि द्रष्टव्यम् ॥

वैयाकरणास्तु गङ्गादिपदानां तीरादौ शक्तिरेव । सर्वेषां पदानां प्रायः सर्वत्रैव शक्तिः लक्षणा च स्वतन्त्रवृत्तिर्नाभ्युपेयेत्याहुः । प्रपञ्चितञ्चैतद्वैयाकरणभूषणे । ननु केयं शक्तिः ॥ अभिधानात्मकं पदार्थान्तरं सङ्केतग्राह्यमिति मीमांसकाः ॥ सिद्धान्तस्तु घटपदाद् घटो बोद्धव्य इतीश्वरेच्छारूपसङ्केतः शक्तिः । सा च पूर्वोक्तरीत्या वृद्धव्यवहाराद् ग्राह्या, वृद्धानां वृद्धेभ्य इति सृष्ट्यादौ ईश्वराद् ग्राह्य इति । आधुनिकपुत्रादिषु सङ्केतितदेवदत्तादिपदे च पित्रादिसङ्केताद् ग्राह्या । द्वादशेऽह्नि पिता नाम कुर्याद् इति शास्त्रसिद्धत्वात् तत्रापि सास्त्येवेति दिक् ॥ एवं शब्दाच्छाब्दबोधे तात्पर्यज्ञानमपि हेतुः । अन्यथा सैन्धवमानयेत्यत्र भोजनप्रकरणे लवणतात्पर्यग्रहे सति अश्वबोधप्रसङ्गात् । न च शुकबालादीनां तात्पर्याभावेन तदुच्चरितशब्दाद्बोधो न स्यादिति वाच्यम् । तत्रापि ईश्वरतात्पर्यसत्त्वात् । तच्च तात्पर्यं वेदे मीमांसान्यायगम्यं नियतम् । लोके तु वक्तुरिच्छाधीनमनियतमत एकस्मादेव शब्दात् श्लेषादिवाक्येष्वनेकार्थबोधः । यथा श्वेतो धावतीत्यादौ । नन्वेवमपि 'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्' इत्यत्र त्वद्गमने सति वियोगान्मे प्राणहानिरिति प्रतीतिः कथमिति चेत् । सत्यम् । व्यञ्जनारूपवृत्त्यन्तराङ्गीकारात् इत्यालङ्कारिकाः । एवं गतोऽस्तमर्क इत्युदासीनवाक्येऽपि नानाविधास्तु तत्पुरुषीयबोधा एव सहृच्छन्तः...

ब्धिः । तत्करणमनुपलब्धिः । स चोपलब्धेर्निर्णयात्मकज्ञानस्याभावः । तथाहि । वस्तुतो घटाभाववति घटो ऽस्तीति भ्रमसमये घटाभावेन सह सन्निकर्षे सत्यपि तज्ज्ञानं चोत्पद्येत अतस्तत्र घटानुपलब्धिः करणं तदभावाश्च तत्र ज्ञानम् । चक्षुरादिकं चाधिकरणादिग्रहणार्थमनुपलब्धेर्योग्यतासम्पादनार्थं चोपयुज्यते । योग्यता च यद्यत्र घटः स्यात् उपलभ्येतेति तर्कसम्पत्तिरेवेति भाट्टाः । एतादृश्यनुपलब्धिः प्रत्यक्षसहकारिण्येवातो नानुपलब्धिः प्रमाणम् । प्रमाणान्तरकल्पने गौरवादिति नैयायिकादयः । वस्तुतो घटवति घटाभावनिर्णये सति चक्षुःसंयोगे सत्यपि घटज्ञानानुत्पत्तेरभावानुपलब्धेरपि भावग्रहे हेतुतापत्तिः । न चेष्टापत्तिः । अपसिद्धान्तात् प्रमाणाभावाच्च । विवेचितं चैतदन्यत्र । तस्मान्नानुपलब्धिः सहकारिणी न च प्रमाणान्तरमिति तत्त्वम् ॥

सम्भावनया जानामीति प्रतीतिसिद्धजातिमती साम्भवी ॥ तत्करणं सम्भवः । यथा ब्राह्मण इति श्रुते विद्यायाः शतमित्युक्ते दशादिसङ्ख्यायाः प्रतीतौ ॥

अज्ञातकर्तृकं प्रसिद्धवाक्यमैतिह्यम् ॥ गङ्गेयं मधुरेयं वेदोपमिति ज्ञानमैतिह्यादेव । अन्यस्पामसरादिति पौराणिकाः । ब्राह्मणे विद्या भविष्यतीति चोक्तकोटिकः संशय एव । शते दशेति त्वनुमानम् । तथा व्याप्तिज्ञानवत्तामेव ज्ञायमानत्वात् । ऐतिह्यं चेत्प्रमाणं चेच्छब्द एव । अन्यथा प्रमाणमेव नेति दार्शनिकाः ॥ एतादृशचेष्टयेत्ययमर्थो बोद्धव्य इति सङ्केतवच्चेष्टातो बोधस्थले च तथा शब्दोपस्थितिस्ततो बोधः शाब्द एव । अन्यथा त्वेतादृश्या चेष्टया ऽनुमानमेवेति न हस्तनेत्रादिचेष्टातो बोधानुरोधाच्चेष्टायाः पृथक् प्रमाणत्वमपीति तान्त्रिकाः ॥ त-

देतैः प्रमाणैर्जायमाना बुद्धिरनित्यैव मानसप्रत्यक्षा च, जानामीति मनसानुभवात् ॥

प्रभाकरास्तु सर्वा बुद्धिः स्वप्रकाशा त्रितयविषयिणी च । आत्मस्वात्मविषयश्चेति त्रयम् । घटमहं जानामीति सर्वज्ञानानुभवात्, ज्ञानस्य परप्रकाश्यत्वे तदपि परप्रकाश्यमित्यज्ञायमानस्वीकारात् अन्धपरम्परया निद्राद्यभावो वा स्यादित्याहुः ॥

भाट्टास्तु ज्ञानेन विषये ज्ञातता जन्यते ज्ञातो घट इत्यनुभवात् धात्वर्थक्रियाजन्यफलशालित्वेन घटं जानामीत्यादौ कर्मत्वमप्येवं सङ्गच्छते । तथा च तया ज्ञाततया ज्ञानमनुमीयते । घटो ज्ञानविषयो ज्ञाततावत्त्वादिति । एवं चातीन्द्रियं ज्ञानमित्याहुः । एवं स्वप्रकाशविधया ज्ञाततया वा ज्ञाने गृह्यमाणे तद्गतं याथार्थ्यरूपं प्रामाण्यमपि गृह्यते ज्ञानग्राहकसामग्रीग्राह्यत्वरूपस्वतस्त्वस्य तत्राभ्युपगमादिति मीमांसकाः ॥

नैयायिकास्तु एवं सति जातं ज्ञानं प्रमा नवेति संशयानुपपत्तेर्नेदं युक्तम् । किं तु मनसा ज्ञानं गृह्यते । पुनर्विषयलाभोत्तरं जातं ज्ञानं प्रमा, फलवत्प्रवृत्तिजनकत्वादित्यनुमानात्तद्ग्रहः । मीमांसकानामर्थविसंवादिप्रयुक्ताऽप्रामाण्यग्रहवत् । अन्यथा तस्यापि स्वतो ग्राह्यत्वापत्तिश्च इति ज्ञानग्राहकविशेषाग्राह्यत्वरूपं परतो ग्राह्यं प्रामाण्यमाहुः ॥

भक्तिश्रद्धादयोपि बुद्धिभेदाः । स्वाराध्यत्वेन ज्ञानं भक्तिः, वेदबोधितफलावश्यम्भावनिर्णयः श्रद्धेत्यन्यत्र विस्तरः ॥

सुखत्वजातिमद्धर्ममात्रजन्यतावच्छेदकजातिमद्वा निरुपाधिप्रमास्पदं वा सुखम् ॥

तच्चतुर्विधं वैषयिकं मानोरथिकमाभ्यासिकमाभिमानिकं च । विषयसाक्षात्कारजमाद्यम् । विषयध्यानजं मानोरथिकम् ।

सूर्यनमस्काराद्यभ्यासाज्जायमानं शरीरलाघवादि तृतीयम् । द्रव्यपाण्डित्यगर्वजमन्त्यम् । एवं दुःखेऽपि द्रष्टव्यम् ॥

दुःखत्वजातिमन्निरुपाधि द्वेषास्पदं वा दुःखम् ॥

इच्छामीत्यनुभवसिद्धेच्छात्वजातिमतीच्छा ॥

सा च सुखमोक्षयोः सुखदुःखाभावत्वप्रकारकज्ञानादुत्पद्यते । तत्साधने सुखदुःखाभावसाधनताज्ञानादेव स्त्रीपुत्रादौ संन्यासादौ च तथा ॥

द्वेष्मीत्यनुभवसिद्धजातिमान् क्रोधापरपर्यायको द्वेषः ॥

यते इत्यनुभवसिद्धयत्नत्वजातिमान् यत्नः ॥

स द्विधा जीवनयोनिरन्यश्च । जीवनादृष्टं योनिः कारणं यस्य स आद्यः सर्वदा प्राणसञ्चारकारी । गुरुभारोत्तोलनधावनादौ प्रयत्नविशेषाच्छ्वासक्रियाविशेषदर्शनात् 'यद्विशेषयोः कार्यकारणभावो बाधकं विना तत्सामान्ययोरपी'ति न्यायेन प्राणक्रियासामान्ये यत्नसामान्यजन्यत्वदर्शनान्निद्रादिसकलकालिकस्य तस्यावश्यकत्वात् स चातीन्द्रियः । द्वितीयो द्विधा । एको द्वेषजः सर्पादिभ्यो निवृत्तिलक्षणः । शत्रुवधादौ प्रवृत्तिरूपस्तु न द्वेषजः किं तु तन्मरणेच्छाजः । इच्छाजन्योऽन्यः । एतौ प्रत्यक्षौ । एते बुद्धीच्छाप्रयत्ना ईश्वरीया नित्या जीवानामनित्याः ॥

विहितयज्ञादिजन्यतावच्छेदकजातिमान् धर्मः ॥

ताश्च ज्योतिष्टोमयज्ञादिजन्यतावच्छेदिका विलक्षणाः, स्वर्गादिजनकतावच्छेदिकाश्च । तत्तददृष्टे विलक्षणा न तु धर्मत्वमेका जातिर्मानाभावात्, धर्मत्वेन सुखत्वेन कार्यकारणभावाभावादिति । अत एव बाधकाभावात् विज्ञानमानन्दं ब्रह्मेति श्रुतेरीश्वरे नित्यसुखमस्तीति वेदान्तिनः ॥

निषिद्धपरदारगमनादिजन्यतावच्छेदकजातिमानधर्मः ॥

धर्मत्ववदेव ता अपि नाना तत्तद्दुःखजनकतावच्छेदिकाश्च । ननु यागादिजन्यातीन्द्रियधर्माधर्मयोः किं मानम् । उच्यते । इष्टसाधनत्ववाचिना विधिना अनिष्टसाधनत्वबोधकनिषेधेन यागपरदारगमनादेस्तथात्वं बोध्यते । न च चिरविनिष्टस्य कालान्तरभाविस्वर्गादिसाधनत्वं साक्षादयुक्तमतो व्यापारत्वेन तावभ्युपेयौ । न च यागादिध्वंस एव व्यापारोऽस्त्विति वाच्यम् । एवं हि कारणीभूताभावप्रतियोगित्वेन यागादेः प्रतिबन्धकत्वापत्तेः । किं च कीर्तितधर्मादपि फलापत्तिः व्यापारसत्त्वात् । अकीर्तितयागत्वेन कारणतेति न कीर्तितात्फलमिति चेन्न । फलोत्तरकीर्तितादपि फलानापत्तेरिति दिक् ॥ एतौ धर्माधर्मौ त्रिविधौ सञ्चितौ क्रियमाणौ प्रारब्धसञ्ज्ञौ च । तत्र तच्छरीरारम्भकं प्रारब्धं कर्म तद्भोगैकनाश्यं जीवन्मुक्तिशास्त्रानुरोधात् । आद्यं ज्ञाननाश्यं 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे'ति शास्त्रादिति वेदान्तिनः । सिद्धान्तिनस्तु 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभ'मिति वचनस्य प्रायश्चित्तनाश्यव्यतिरेकेण सङ्कोचे प्रमाणाभावात्, सञ्चितस्यापि कायव्यूहेन भोगादेव नाशः । भस्मसात्पदं तु लाक्षणिकं शीघ्रमेव भोगान्नाशं लक्षयतीति दिक् ॥ क्रियमाणं ज्ञानिनि नोत्पद्यते । 'लिप्यते न स पापेन पद्मपत्रमिवाम्भसेति' वचनात् । नन्वेवं योगिभिः क्रियमाणकर्मणो वैयर्थ्यापत्तिरिति चेत् न । तस्य लोकसङ्ग्रहमात्रार्थत्वात् । वस्तुतस्तु 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधु कृत्यां द्विषन्तः पापकृत्या'मिति श्रुतौ तस्य परार्थत्वं स्फुटमित्यवधेयम् ॥

संस्कारत्वजातिमान्संस्कारः ॥

स त्रिधा, वेगो भावना स्थितिस्थापकश्च ॥ वेगेन गच्छतीति प्रत्यक्षसिद्धवेगत्वजातिमान्वेगः ॥ मूर्त्तमात्रवृत्तिः ॥ भावना च स्मृतिजनकः स्वजन्यस्मृतिनाश्यश्च संस्कार आत्मवृत्तिरतीन्द्रियः पूर्वज्ञानजन्यः । तत्र ज्ञानस्यानुभवत्वेनैव कारणतेति प्राञ्चः । नव्यास्तु सकृदनुभूतस्य स्मरणोत्तरं संस्कारनाशेन पुनर्विनानुभवमस्मरणप्रसङ्गात् पुनः पुनः स्मरणात् दृढतरसंस्कारोत्पत्तेरनुभवसिद्धत्वात् । अनुमितौ शाब्दबोधे च सत्यपि स्वर्गं नरकं चानुभवामीत्यप्रतीतेः । अनुभवत्वे जातौ प्रमाणाभावेन स्मृत्यन्यज्ञानत्वरूपस्यानुभवत्वस्य कारणतावच्छेदकत्वे गौरवापत्तेस्ततोऽपि लाघवाच्च ज्ञानत्वेनैव तत्कारणत्वमित्याहुः । तथा च पुनः पुनः स्मरणस्थले स्मरणादेव दृढतरसंस्कारोत्पत्तिरिति । एतेषां पूर्वानुभवतज्जन्यसंस्कारतज्जन्यस्मृतीनां समानविषयत्वमतो न घटज्ञानात्पटस्मृतिः ॥

स्थितिस्थापकश्च यथास्थितवस्तुस्थित्यानुपेयः । पृथिवीवृत्तिरतीन्द्रियश्च ॥

शब्दं शृणोमीत्यनुभवसिद्धशब्दत्वजातिमान् शब्दः ॥

स द्विधा ध्वनिर्वर्णश्च । तत्र ध्वनिः सङ्गीतशास्त्रसिद्धानेकभेदवान् तत्करणं मुखवीणादिर्वर्णः ककारादिः । उभयत्रापि आकाशः समवायिकारणम् । भेर्याकाशसंयोगवंशदलाकाशविभागादि रसमवायिकारणम् । जिह्वाताल्वादिसंयोगवंशदलविभागादिनिमित्तकारणम् । क्वचिच्छब्दोऽपि शब्दासमवायिकारणम्, दूरभेरीताडनस्थले । तत्र भेर्याकाशसंयोगादुत्पन्नस्तारतरो न दूरस्थपुरुषीयश्रवणगोचरः । तस्य मन्दत्वेनानुभवात् । किं तु भेरीशब्दा वीचितरङ्गन्यायेन कदम्बमुकुलन्यायेन वा श-

द्राच्छब्दस्तस्मादन्य इत्येवं मन्दादिभावेन जायमानेषु स्वश्रोत्रावच्छिन्नोत्पन्नः स्वयं गृह्यते । तेषु पूर्वशब्दोऽसमवायिकारणम् । स च स्वव्यक्तिभेर्यादिप्रयोज्यजातिमन्तं जनयतीति भेरीशब्दो मया श्रुत इति धीर्न विरुध्यते । तथा चासमवायिकारणत्रैविध्यात् त्रिविधोऽपि त्रिधेति फलितमिति । उक्तं च । 'संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्ति'रिति । सोऽयं शब्दो द्विक्षणस्थायी क्षणोत्तरमनुपलम्भात् नाशकानुरोधाच्च । स्वजन्यः शब्द एव नाशकः । स चोत्पत्तिद्वितीयक्षणे पूर्वं नाशयतीति सर्वे द्विक्षणस्थायिनः । अन्त्यस्य च जनकशब्दो नाशकः सुन्दोपसुन्दन्यायेनेत्यतः क्षणिक एवान्त्यशब्द इत्येके । अन्त्यशब्द उपान्त्यनाशकनाश्य इति सोऽपि द्विक्षणस्थाय्येवेत्यन्ये । सर्वसाधारण्यान्निमित्तवायुसंयोगनाश एव शब्दनाशकः । तथा च वायुसंयोगस्ततः पूर्वक्रियानाशशब्दोत्पत्ती ततः क्रियापूर्वदेशविभागसंयोगनाशशब्दनाशा इति क्रमेण नाशाच्छब्दश्चतुःक्षणस्थायीति नव्याः । सोऽयं शब्दो नित्य एव, योऽयं गकारः शिवेनोक्तः स एव विष्णुनोच्यते, महरात्पूर्वमुक्त इदानीमुच्यत इति प्रत्यभिज्ञानात् । विभुश्च, योऽयं काश्यां हकारः श्रुतः स एव सत्ता वने चोच्यते इति प्रतीतेः सर्वदेशव्यापिनस्तस्यानुभवात् । विभुत्वाच्च द्रव्यमेव सः । योऽयं तारो मया श्रुतः स एव मन्द्रः श्रूयते इति प्रतीतिस्तारत्वादिकमपि तत्र न विरुध्यते इति मीमांसकाः । उत्पन्नो गकारो नष्टो गकार इति प्रतीतेरुत्पत्तिनाशवानेव शब्दः । सोऽयमिति तु तज्जातीयोऽयमिति भासते इति नैयायिकाः । तत्त्वं वैयाकरणभूषणेऽस्माभिः प्रपञ्चितम् ॥

संयोगविभागयोरनपेक्षकारणं कर्म ॥

स्वोत्तरभाविभावाऽजन्यसंयोगविभागजनकमित्यर्थः । तेन

कर्मणा संयोगे जननीये स्वोत्तरमुत्पद्यमानस्य विभागस्य विभागप्रतिबन्धकीभूतपूर्वसंयोगध्वंसस्य चापेक्षायामपि न क्षतिः। विभागस्य प्रतिबन्धकाभावसम्पादकत्वेनान्यथासिद्धत्वेनाजनकत्वात् संयोगध्वंसस्य भावत्वाभावात् । न चासमवायिकारणादेश्च पूर्वोत्पन्नस्यापेक्षितत्वेन दोषः । संयोगजसंयोगे पूर्वसंयोगस्य विभागजविभागे पूर्वविभागस्य तथा प्रत्येकं जनकत्वसत्त्वात्संयोगविभागेत्युभयमुपात्तम् । उभयजनकत्वं कर्मण एव न संयोगादेरिति नातिव्याप्तिः । तच्चोत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात् पञ्चधा। भ्रमणादयस्तु गमनभेदा एव। तच्च मूर्त्तमात्रवृत्ति मूर्त्तत्वेनैव तत्कारणत्वात् । अत एव कर्मसमवायिकारणतावच्छेदकतया मूर्त्तत्वं जातिरेवेति नव्याः । इयत्तावच्छिन्नपरिमाणवत्त्वमुपाधिरेवेति प्राञ्चः । तच्च संयोगवेगप्रयत्नगुरुत्वद्रवत्वस्थितिस्थापकाऽसमवायिकारणकम् । धनुःसंयोगादिषौ प्रथमं कर्म । ततो वेगजं कर्म द्वितीयम् । प्राणिगमनं तृतीयम् । पतनं चतुर्थम् । स्पन्दनं पञ्चमम् । पर्णादौ विलुण्ठने यथावस्थानहेतुः षष्ठम् । तत् स्वजन्यसंयोगनाश्यम् । अत एव क्षणचतुष्टयस्थायि व्याप्यवृत्त्येवेति प्रपञ्चितमन्यत्र ॥

नित्यमेकमनेकसमवेतं सामान्यम् ॥

यथा घटत्वादि । घटत्वे नित्यमेकमनेकघटेषु समवेतं चेति लक्षणसमन्वयः । समानानां भावः सामान्यम् । अनेकानुगतो धर्म इति यावत् । शब्दवत्त्वादिकं च समवायेन शब्दाधेयेति न सामान्यान्तरम् । तच्च द्विविधं जातिरुपाधिश्च । तत्र जातिः समवायेनैव वर्त्तते उपाधिरनेकपदार्थघटितो धर्मः । यथा कारणत्वान्यथासिद्धत्वादिः । अन्यथासिद्धत्वं चावश्यकल्प्यमानपूर्ववर्त्तिना कार्यसम्भवे तत्सहभूतत्वम्। निष्कृष्टं प्रागुक्तम् । प्राञ्च-

स्त्वन्यथाप्याहुः । यथान्यत्रक्लृप्तनियतपूर्ववर्तिन एव कार्यस-
म्भवे तत्सहभूतत्वं, यथा रासभादेः । अन्यं प्रति पूर्ववर्तित्वे गृ-
हीते एवान्यं प्रति पूर्ववर्तितया गृह्यमाणत्वं च । यथाकाशकुला-
लपित्रादेः । एवं भावत्वाभावत्वेन्द्रियत्वविषयत्वादिकमपि ।
तत्र समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्वं भावत्वम् ।
उक्तसम्बन्धेन सत्ताऽभाव एवाभावत्वम् । ज्ञानजनकमनःसंयोगा-
श्रयातीन्द्रियत्वमिन्द्रियत्वम् । इन्द्रियमनोयोगस्य ज्ञानजनकत्वा-
ल्लक्षणसमन्वयः । आत्ममनोयोगस्य ज्ञानहेतुत्वादात्मन्यतिव्या-
प्तिवारणायातीन्द्रियमिति । विषयतारूपसम्बन्धेन साक्षात्का-
रवत्त्वं विषयत्वम् । शरीरादौ तत्सत्त्वेपि न दोषः । उपधेय-
सङ्करेपि उपाधेरसङ्करत्वात् । एवं कारणत्वावान्तरं, समवायि-
कारणत्वमसमवायिकारणत्वं निमित्तकारणत्वं च । समवायेन
कार्याधारत्वमाद्यम् । तच्च द्रव्यमात्रवृत्ति, द्रव्यत्वस्यैव कार्य-
समवायिकारणतावच्छेदकत्वात् । समवायैकार्थसमवायप्रत्यास-
त्त्या कारणत्वमसमवायिकारणत्वम् । एवं रूपरसगन्धस्पर्शस्नेह-
सांसिद्धिकद्रवत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मशब्देषु वि-
शेषगुणत्वम् । तच्च स्वाश्रयव्यावृत्त्यौपाधिकावान्तरसामान्य-
वत्त्वम् । पृथिवी जलादिभ्यो भिद्यते पाकजरूपात् । तेज इत-
रेभ्यो भिद्यते शुक्लभास्वररूपात्, उष्णस्पर्शाद्वा इत्यादि, स्वा-
श्रयस्य व्यावर्तकतावच्छेदकत्वेनोपयुक्तमवान्तरजातिमत्त्वमस्ती-
ति लक्षणसमन्वयः । एवं निरूप्यमाने व्याप्त्याद्यपीहोदाहर-
णम् । नन्वेवं पृथुबुध्नोदराकारवत्त्वगन्धवत्त्वगुणाश्रयत्वसास्ना-
दिमत्त्वाद्युपाधिभिरेव घटः पृथिवी द्रव्यं गौरित्यादिप्रतीत्युपपत्ते
र्घटत्वादिजातौ किं मानमिति चेत् । उच्यते । कारणत्वकार्य-
त्वाद्यस्तावत्सावच्छिन्नास्तथा च चक्रकार्यतावच्छेदकतया गं

न्धस्य कार्यमात्रस्य च कारणतावच्छेदकतया दानहननादिभिः पुण्यपापोत्पत्तेस्तत्कारणतावच्छेदककोटिप्रविष्टतया च घटत्वपृथिवीत्वद्रव्यत्वगोत्वादिकमावश्यकम्। उपाधेः क्लृप्तत्वेपि गौरवेणावच्छेदकत्वासम्भवाद्बाधकाभावे ऽवच्छेदकत्वं लघुधर्म एव प्रवर्त्तते इति सिद्धान्तात्। एवं बाधकाभावे ऽनुगते प्रतीत्यापि तत्सिद्धिः। स च बाधकसंग्रहः प्राचीनैरुक्तः। 'व्यक्तेरभेदस्तुल्यत्वं सङ्करो ऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः' इति। घटत्वात्कलशत्वं न पृथग् जातिः तद्व्यक्त्यभेदात्। द्रव्यत्वाद् गुणाश्रयत्वं न पृथक् जाति, तुल्यव्यक्तिकत्वात्। शरीरत्वं न जातिः, पृथिवीत्वादिना सङ्करप्रसङ्गात्। परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः सङ्करः। पृथिवीत्वं विना तैजसादिशरीरे शरीरत्वं वर्तते, शरीरत्वं विना च घटादौ पृथिवीत्वं, तदुभयमस्मदादिशरीरे। सामान्यत्वं न जातिस्तत्रापि सामान्यस्वीकारे ऽनवस्थाऽऽत्माश्रयान्यतरापत्तेः। आकाशत्वं घटो वा न जाति, नित्यमेकमनेकसमवेतं सामान्यमिति रूपहानात्। अत एवाभावसात्वादिमत्त्वं च न जातिः। समवाय उक्तलक्षणाक्रान्तोपि न जाति सम्बन्धविरहात्। सम्बन्धिभिन्नत्वे सति संबन्ध्याश्रयत्वस्यैव सम्बन्धत्वेन स्वरूपे सम्बन्धत्वव्यवहारस्य गौणत्वात्स्वरूपसमवाययोर्द्वित्वाभ्युपगमेपि न क्षतिः। तच्च सामान्यं त्रिविधं परमपरं परापरं च। सकलसामान्यव्यापकं परम्। सत्ता यथा। सामान्यान्तराऽव्यापकमपरम्। परिमाणभेदेन भिन्नेषु बाल्यकौमारादियुक्तशरीरेषु देवदत्तत्वादि। यस्य कस्य चित्सामान्यस्य व्यापकं कस्य चित् व्याप्यं चान्यम्। द्रव्यत्वादि यथा। पृथिवीत्वादेर्घटत्वादेर्व्यापकं सत्ताव्याप्यं च तदित्यन्यत्र विस्तरः॥

नित्यद्रव्यवृत्तयो ऽन्त्या विशेषाः ॥

समानजातीयरूपरसादिमत्परमाण्वादीनां परस्परभेदकं विना भेदनिर्णयासम्भवाद्भेदकत्वेन विशेषा अनुमीयन्ते । अनित्यद्रव्येषु स्वाश्रयेणैव भेदसम्भवात् । ते ऽत्र नेष्टाः प्रमाणाभावात् । नित्यद्रव्यवृत्तित्वं तेषां व्यावर्तकान्तराभावे सत्यन्ते व्यावर्तकत्वेन स्वीक्रियमाणत्वादन्त्यत्वं चेति लक्षणसमन्वयः । यथा प्रजारक्षकत्वेन महाराज आवश्यकः स च स्वत एव स्वरक्षणसमर्थः । एवं विशेषाः स्वत एव व्यावृत्ता इति नानवस्था । शब्दसमवायिकारणतावच्छेदकतया चाकाशे तत्सिद्धिः। अष्टद्रव्यातिरिक्तद्रव्यत्वादेराकाशमात्रवृत्तित्वेपि गौरवेण कारणतावच्छेदकत्वासम्भवेन द्रव्यत्वादिजातिवत्त्वावश्यकत्वादिति दिक् ॥

अयुतसिद्धानां सम्बन्धः समवायः ॥

विशेषणतान्यसम्बन्धेन यावदुभयसत्त्वं ययोराश्रयाश्रयिभावस्तावयुतसिद्धौ । यथा गुणगुणिनौ । पटोत्पत्तेः पूर्वं तन्तुसत्त्वादव्याप्तिवारणायोभयेति । वायुरूपाभावकालघटादेरयुतसिद्धत्ववारणाय विशेषणतान्येति । अभावस्य च विशेषणतैव सम्बन्ध इत्युक्तम् । कालो ऽपि विशेषणतयैव जगदाधार इति स्पष्टमन्यत्र । प्राञ्चस्तु विनाशक्षणपर्यन्तं ययोराश्रयाश्रयिभावस्तावयुतसिद्धौ । तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ, ययोर्द्वयोरनश्यदेकमपराश्रितमेवावतिष्ठते । ते चावयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति । तन्तुपटादयो ऽवयवावयविन । आश्रयनाशजन्यघटादिनाशस्थले नाशसमये घटादेरनाश्रितत्वाभ्युपगमो विनाशक्षणपर्यन्तमिति । तन्न । नित्यगुणतदाश्रययोरा

स्यात्समवजात्योर्विशेषनित्यद्रव्ययोश्च्याप्तेः । अयं समवायः तन्तुषु पटः समवेत इत्यादिप्रत्यक्षसिद्ध इति नैयायिकाः । वैशेषिकास्तु समवायो न प्रत्यक्षः यावदाश्रयप्रत्यक्षं विना सम्बन्धप्रत्यक्षासम्भवात् सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात् । अन्यथा घटौ संयुक्तौ इतिवत् सम्बन्धत्वं संयोगसमवायान्यतरत्वं तच्च संयोगसमवायभिन्नभिन्नत्वं, घटे रूपसमवाय इतिवत् आकाशे शब्दसमवाय इत्यपि प्रत्यक्षापत्तेः । एतेन संयोगप्रत्यक्षे एव यावदाश्रयप्रत्यक्षं हेतुर्लाघवात्, न तु सम्बन्धप्रत्यक्षमात्रे संयोगसमवायान्यतरत्वरूपसम्बन्धत्वस्य कार्यतावच्छेदककोटिप्रवेशे गौरवादीति निरस्तम् । उक्तप्रत्यक्षापत्तेर्वारणाय तस्यावश्यकत्वात् । किं तु रूपादि घटादिसम्बन्धवद् तदाश्रितत्वादित्याद्यनुमानात्तत्सिद्धिः । न चाधाराधेयभावादिरेव रूपघटयोः सम्बन्धोऽस्त्विति शङ्क्यम् । घटनाशात् घटवृत्तिरूपरसादिनाशवत्तद्वृत्तिपटादेरभावस्य च नाशप्रसङ्गात् । घटध्वंसकालिकघटवृत्तिनाशत्वस्य घटनाशकार्यतावच्छेदकत्वपर्यवसानात् । समवायाभ्युपगमे च घटसमवेतनाशत्वमेवावच्छेदकमतो न दोषः । न च तथापि घटनाशाद् घटत्वनाशापत्तिः । भावनाशं प्रति जन्यत्वेन कारणत्वात् । *एतेन सम्बन्धतया समवायकल्पने भूतलघटाभावादेरपि* वैशिष्ट्याख्यसम्बन्धस्वीकारापत्तिरित्यपास्तम् । तत्र भावकार्यादिति रूपवान् घट इत्यादिविशिष्टप्रत्यक्षं तु सम्बन्धविषयत्वेऽपि तारतम्यमात्रेण सङ्गच्छते । अहं शरीरीत्यापादनाच्च दृष्टसंसर्गकप्रत्ययवदित्याहुः । मीमांसकास्तु गुणगुण्यादीनां तादात्म्यमेव नीलो घटश्चञ्चलः पृथक् मृदुर्घट इत्यभेदानुभवादतः समवायो निष्प्रमाणक इत्याहुः ॥ ननु शक्तिसादृ-

स्यादयोऽपि पदार्थान्तराणि सन्तीति कथं षडेव भावा इति । नैवम् । अविद्यारूपा वाचकत्वशक्तिस्तावदीश्वरेच्छारूपेत्युक्तम् । वन्हौ दाहानुकूला शक्तिस्तु कारणतारूपसामान्यमेव । न च मण्यादि-प्रतिबन्धकसत्त्वे दाहाद्यनिवारणाय प्रतिबन्धकापनोद्यशक्तिस्वी-कार आवश्यक इति वाच्यम् । मण्यभावादेरपि कारणत्वकल्प-नया तन्निरासात् । नानृतं वदेदिति विधेयस्यानृतवचननिषेधरू-पस्याभावस्य कारकत्वस्य पूर्वमीमांसायां क्रत्वधिकरणे व्युत्पादि-तत्वात् । सादृश्यं च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपं सा-मान्यमेवेति दिक् ॥

अभावो द्विधा संसर्गाभावो भेदश्च । संसर्गारोपजन्यप्रती-तिविषयाभाव आद्यः । भूतले घटो नेत्यारोप्यैव निषेधप्रतीतेः । स त्रिधा प्रागभावो ध्वंसो ऽत्यन्ताभावश्च । भविष्यतीति प्र-तीतिविषयो विनाश्यभावः प्रागभावः । तस्य ध्वंस. प्रतियोगी । घटध्वंसस्य उभयकाले घटप्रागभावो नष्ट इति प्रतीतेः ॥ उत्प-त्तिमानभावो ध्वंसः । घटध्वंसो जात इति प्रतीतेः । तत्प्रागभा-वश्च । घटस्तत्प्रागभावस्य उभयस्यापि ध्वंसो भविष्यतीति प्र-तीतेः । स च न विनाशी, ध्वंसो नष्ट इति प्रतीत्यभावात् । ध्व-ध्वंसधाराकल्पनायां प्रमाणाभावाच्च । उत्पत्तिविनाशशून्यः संसर्गाभावो ऽत्यन्ताभावः । ह्रदे वह्निर्नास्ति इति भूतलादौ घ-टापसरणोत्तरं तदानयनात्पूर्वं च प्रतीतस्य तस्य घटकाले स-त्त्वेऽपि न प्रतीतिः । घटज्ञानेन प्रतिबन्धात् । प्रतियोगिदेशान्य-देशत्वरूपानतिप्रसक्तसम्बन्धसम्बन्धित्वादित्याचार्याः । उत्पत्तिवि-नाशशील प्रतियोगिसमानाधिकरणस्तदीय एव तत्र संसर्गा-भाव इत्यन्ये । स द्विधा एकमात्रपर्याप्तधर्मावच्छिन्नप्रतियो-गिताको ऽन्यश्च । घटत्वादि प्रत्येकपर्याप्तमेकस्मिन्नपि घट इति

प्रतीतेः । तदवच्छिन्न आद्यः । द्वित्वादि अनेकपर्याप्तम् । घटौ द्वावितिवदेको द्वावित्यप्रतीतेः । तदवच्छिन्न एकघटवति घटौ न स्त इति प्रतीतिविषयो ऽन्त्यः । न च प्रतियोगिमति कथमभाव इति वाच्यम् । पुरुषमात्रवति दण्डी पुरुषो नास्तीति प्रतीतेर्दण्डविशिष्टपुरुषाभावस्वीकारेण प्रतियोगितावच्छेदकाविशिष्टस्यैवाभावविरोधित्वात् । न चेयं प्रतीतिर्दण्डाभावं पुरुषाभावं वाऽवगाहते । केवलदण्डपुरुषवति तत्संयोगवति पुरुषे दण्डे च दण्डी पुरुषो नास्तीति अनुगतप्रतीतेरिति दिक् ॥ तादात्म्यारोपजन्यप्रतीतिविषयाभावो भेदः । घटः पटो नेत्यारोप्यैव तन्निरोधात् । सोपि घटः पटो न, पटो न घटपटाविति प्रतीतेः पूर्ववद् द्विधा । न च घटवति पटाभावो नास्ति घटो न पटाभिन्न इति प्रतीतेरभावाभावोपि सिद्ध्येत् । एवं सोपि नास्तीति प्रतीत्या तदभावोपीत्यनवस्थेति शङ्क्यम् । अत्यन्ताभावाभावः प्रतियोग्येव घटादिः । अन्योन्याभावाभावः प्रतियोगितावच्छेदकघटत्वादिरूप इति स्वीकारात् । ततोतिरेके प्रमाणाभावादिति प्राञ्चः । नव्यास्त्वभावत्वेन प्रतीतेर्घटादिप्रतियोगितदवच्छेदकयोः समानवृत्तिको ऽतिरिक्त एवात्यन्ताभावभेदयोरभावः । तदभावस्तु घटाभाव एवेति नानवस्था । एवं ध्वंसस्य प्रागभावः प्रागभावस्य ध्वंसश्चातिरिक्त एवेत्याहुः । नन्वधिकरणमेवास्तु कुतस्तदतिरिक्ततत्स्वीकारः कुतो वा तद्ग्रहणाय विशेषणतास्वीकारः । भूतले घटो नास्तीत्याधाराधेयभावस्याभेदेपि घटाभावे घटो नास्ति इतिवदनुपपत्तेः । अत्यन्ताभावस्य नित्यत्ववादिना घटशून्यभूतले घटानयनोत्तरं तत्सम्बन्धाभावमात्रस्वीकारवदस्माभिस्तदा तदधिकरणे घटाभावत्वसम्बन्धो नास्तीत्यभ्युपेयम् । एतेन तदधिकरणे घटाभावो न वा । आद्ये घट-

कालेपि घटो नास्ति इत्यापत्तिः । अन्त्ये घटानयनात्प्राङ् ना-
स्तीत्यनापत्तिरिति परास्तम् । तन्नातिरिक्ताभावे प्रमाणमिति
चेत् । उच्यते । तत्त्वज्ञानिनां क्रियमाणकर्मभिर्धर्माधर्मौ नोत्प-
द्येते इति सर्वसिद्धम् । तत्कस्य हेतोः । मिथ्याज्ञानवासनारूप-
कारणाभावादिति चेन्न । अनन्तमिथ्याज्ञानवासनानां हेतुतामपेक्ष्य
प्राथमिकतत्त्वज्ञानव्यक्तिप्रागभावस्यैव हेतुत्वकल्पने लाघवात् ।
तथा च लाघवात् कारणत्वेन प्रागभावसिद्धिः । किं चान्यतरक-
र्मजसंयोगे कर्मणः संयोग प्रति न समवायेन हेतुता, कर्मशून्ये तदु-
त्पत्तेर्व्यभिचारात् । नापि कालिकसम्बन्धेन, घटकर्मणा स्तम्भाका-
शसंयोगापत्तेः । तस्मात्स्वजन्यसंयोगप्रागभाववत्ता संसर्गेण कर्मणां
कारणता वाच्येति प्रागभावसिद्धिः । एवमनेकतन्तुकपटादिस्थले
तत्तत्तन्तुसंयोगानामपि न समवायेन हेतुता संयोगेभ्यो द्विमात्रनि-
ष्ठेभ्यः पटस्याधिकेप्युत्पत्तेर्व्यभिचारात् । कालिकेन हेतुत्वे तु-
क्तातिप्रसङ्ग इत्युक्तरीत्या स्वजन्यपटप्रागभाववत्ता संसर्गेण हेतुता
वाच्येति तत्सिद्धिः । एवं दाहे मण्यभावः प्रतिबन्धकाभावतया
कारणम् । तस्याधिकरणस्वरूपत्वे तावदधिकरणानां कारणत्वे
गौरवात् । अभावव्यतिरेकेण कारणतावच्छेदकतयाधिकरणे दु-
र्वचत्वेन तद्योगाच्चात्यन्ताभावोपि लाघवाद् भिन्न आवश्य-
कः । एवमतिरिक्तध्वंसमन्तरेण मोक्षस्यैव दुर्वचत्वात् ध्वंसोप्या-
वश्यकः । तथाहि । न तावन्नित्यसुखाभिव्यक्तिर्मुक्तिः । सुखव-
दभिव्यक्तेर्नित्यत्वे इदानीमपि सत्त्वेन मुक्तिसंसारयोरविशेषप्र-
सङ्गात् । न च नित्यसुखाभिव्यक्तिर्मुक्तिसमये जायते मनसेति
मतं साधु । जन्यभावस्य विनाशित्वनियमेनैकज्ञानव्यक्तिनाशे
मुक्तिहानापत्तेः । अभिव्यक्तिपरम्परा च जन्यज्ञानत्वावच्छिन्ने
शरीरस्य हेतुत्वेन तदभावाच्च युक्ता । तस्मादात्यन्तिको दुःख-

ध्वंसो मुक्तिः। आत्यन्तिकत्वं च समानाधिकरणदुःखतत्प्रागभावाऽसमानकालिकत्वम्। इदानीं सुखदुःखध्वंसस्यास्मदीयदुःखप्रागभावसमानकालिकत्वात्त्वेत्यादि। इदानीमस्मदीयदुःखध्वंसस्य सुषुप्तिकाले दुःखसमानकालिकत्वसत्त्वात्प्रागभावेति। उपान्त्यदुःखध्वंसस्य तत्प्रागभावासमानकालिकत्वाद् दुःखेति। तादृशश्च मोक्षस्तत्त्वज्ञानेनात्मनि जन्यते। तद्यथा। तत्त्वज्ञानेन मिथ्याज्ञानवासनानिवृत्तौ रागद्वेषमोहानां निवृत्त्या कर्मान्तरेषु प्रवृत्तिरेव न, पूर्वसंस्कारात् प्रवृत्त्या कर्मोत्पत्तावपि नादृष्टोत्पत्तिः। अदृष्टहेतुमिथ्याज्ञानस्य तत्त्वज्ञानप्रागभावस्य वा अभावात्। तथा चोक्तं वाचस्पतिमिश्रैः। मिथ्याज्ञानसलिलावसिक्तायामात्मभूमौ धर्माधर्मावङ्कुरं जनयत इत्यादिना। प्राचीनादृष्टं च ज्ञानाग्निसहकृतयोगवशात्कायव्यूहेन युगपत् सर्वभोगान्नश्यति। तथा च पूर्वकर्मसमाप्तौ मोक्षव्यापककर्मान्तराभावाज्जन्माभावे सिद्धे वर्तमानशरीरभोग्यसुखदुःखनाशसिद्धौ चात्यन्तिकदुःखनिवृत्तिरिति। तथा चाक्षपादीयं सूत्रम्। 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति। ननु किं तत्त्वज्ञानं किंवा मिथ्याज्ञानं कथं वा तयोर्निवर्त्यनिवर्तकभावः। उच्यते। देहेन्द्रियादावनात्मन्यात्मत्वबुद्धिरेव मिथ्याज्ञानम्। तच्च संसारिणामनादिप्रवाहागतं दुर्बुद्धिकल्पितकुतर्काद् दृढतरं जायते। तथा लौकायतिकोक्तयुक्त्या देहात्मवादे, नित्यात्मवादसाधकयुक्तिभिर्नित्याणुमनएवात्मेति पक्षे, सकलशरीरव्यापिदुःखाद्युपलब्धिहेतुभिः सकलदेहव्यापकत्वगादीन्द्रियसमुदायात्मपक्षे, इन्द्रियोपघातेऽपि बुद्धिसत्त्वमात्रेण सुखाद्युपलब्धेर्बुद्ध्यात्मवादे, तदभावेऽपि सुषुप्तौ सात्मकत्वव्यवहारात् प्राणात्मवादे। ततश्च तन्निरासार्थं पञ्चानां तेषामात्मवत्त्वे युगपदेव कल्प

चिदिष्टार्थे परस्य तद्विरोधात्तत्त्यागाय च प्रवृत्त्यापत्त्या प्रवृत्तिनिवृत्त्यो. सङ्करापत्तिरित्यादिको देहाद्यतिरिक्तव्यापकात्मनिर्णायक इतरेषां पक्षाणामाभासत्वनिर्णायकः श्रुतिस्मृतीतिहासानां तादृगात्मप्रतिपादकानां तादृगात्मप्रतिपादने तात्पर्यनिर्णायकश्च न्यायसमूहो ऽनुसंधेयः । तदनुसन्धानमेव च विचारः । स द्विधा श्रवणमननभेदात् । तत्र न्यायैर्निर्णीततात्पर्यकश्रुत्यादिभिरात्मनिर्णयः श्रवणम् । ततोप्युक्तवादिदुस्तर्कजालैरसम्भावनाविपरीतभावनोत्पत्तेस्तन्निवारकन्यायानुसन्धानं मननम् । ततश्च व्यासङ्गत्यागेन देहाद्यतिरिक्तात्माकारमनोनुसन्धानं निदिध्यासनम् । ततो यथा श्रुतदेहाद्यतिरिक्तात्मसाक्षात्कारस्तत्त्वज्ञानात्मको जायते ऽयं समूलं मिथ्याज्ञानमुन्मूलयति । विशेषदर्शनजन्यलौकिकसाक्षात्कारत्वेन भ्रमनिवर्तकत्वदर्शनात् । श्रुतिरप्येवमाह । 'तरति शोकमात्मवित्' 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति मिथ्याज्ञाननाशः शोकतरणं तद्धेतुरात्मदर्शनं तद्धेतूनि श्रवणादीनि त्रीणि इति विवेकः । नन्वात्मतत्त्वसाक्षात्कारस्यैव मिथ्याज्ञाननाशकत्वे द्रव्यादिसर्वपदार्थप्रतिपादनं व्यर्थमिति चेन्न । तत्त्वज्ञानमन्तरेण तद्भिन्नत्वेनात्मज्ञानासम्भवात्परम्परोपयोगेन सार्थक्यात् । न्यायव्युत्पादकत्वेनाप्युपयोगाच्च । तथात्मज्ञानं भगवत्प्रसादमन्तरेण न भवतीति सोपि तत्त्वतो ज्ञेय उपास्यश्च । तथा च श्रुतिः । 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यती'ति । आचार्यैरप्युक्तम् । 'स हि तत्त्वतो ज्ञात आत्मसाक्षात्कारस्योपकरोती'ति । नन्वीश्वरे किम्मानम् । न प्रत्यक्षम् । तस्य परोक्षत्वात् । नापि क्षितिः सकर्तृका कार्यत्वात् घटवदिति अनुमानम्मानम् । परमाणावंशतो बाधा

त् घटादावंशतः सिद्धसाधनाच्च अदृष्टद्वारा जीवकर्तृकत्वेन सिद्धसाधनाच उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वरूपकर्तृत्वेन कुलालादेर्हेतुतायाः सिद्धेश्च अनेकज्ञानादौ कारणतावच्छेदककल्पने गौरवापत्तेश्च कृतिमत्त्वस्यैव कर्तृपदार्थत्वाच्च कृधातूत्तरतृचस्तदर्थाश्रयवाचकत्वात् । अस्तु तर्हि कृतिमत्त्वेनैव हेतुतेति चेन्न । अनेककृतिषु कारणतावच्छेदकत्वेन गौरवात् तेन रूपेणापि हेतुत्वाऽसिद्धेः । किं चैवमीश्वरे ज्ञानेच्छयोरसंसिद्धयापत्तिः । श्रुतेस्तत्सिद्धिरिति चेत् । सुखस्यापि स्वीकारापत्तेः । आनन्दं ब्रह्मणो विद्वानिति श्रुतेः । न च वेदकर्तृत्वेनेश्वरसिद्धिः । तस्यानादित्वात् । ' शिवाद्या ऋषिपर्यन्ताः स्मर्तारो ऽस्य न कारका ' इति स्मृतेरिति चेत् । अत्रोच्यते । कुलालादिना ऽसंवलितमृदादिभिर्घटाद्यजननाच्च कुलालादेर्हेतुतेति सर्वसिद्धम् । तत्र कारणतावच्छेदकं न कुलालत्वादि जातिः । कुशलब्राह्मणादिभिरपि तज्जननात् । तत्र तत्सत्त्वेपि सङ्करापत्तेः । नोपाधिरपि, दुर्वचनात् । घटजनकस्य च दण्डादिसाधारणत्वात् । घटजनकत्वेन घटहेतुताया असम्भवाच्च । कृतिमत्त्वेन हेतुतायाश्च प्रागेव निरासात् । तस्मादात्मत्वमेव कारणतावच्छेदकं परं तु अनेनेदमेतदर्थमहं करिष्यामीत्याद्यालोचनरूपज्ञानतादृशेच्छाप्रयत्नास्तद्व्यापारा अन्वयव्यतिरेकासिद्धाः । तान्विना कुलालादेर्घटाद्यनुत्पत्तेः । अतो द्व्यणुकाद्युपादानगोचरपरमाणुभिर्द्व्यणुकं करिष्यामि इत्यादिकज्ञानादिमानात्मा तत्कर्ता वाच्यः । स च सृष्ट्यादौ शरीराद्यभावात्तादृशजन्यज्ञानाऽसम्भवान्नित्यज्ञानवान् सिद्ध्यतीश्वर इत्युच्यते । एवं च कार्यमात्रकारणतावच्छेदकत्वेनैव जीवेश्वरसाधारणात्मत्वजातिसिद्धिरिति वयं विभावयामः । तथा च जन्य

कृत्यजन्यकार्यमात्मजन्यं कार्यत्वात् घटवदित्यनुमानमेव तत्र प्रमाणम् । घटादावंशतः सिद्धसाधनवारणायाजन्यान्तं पक्षे विशेषणम् । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धावुद्देश्यायामस्यादूपणत्वे च तन्नोपादेयम् । एवं चेश्वरस्य सर्वज्ञतापि सिध्यति । केषां चित्पदार्थानां फलत्वेन केषां चित्सृज्यत्वेन केषां चिद्धेतुत्वेन केषां चिदवच्छेदकत्वेन विषयीकरणादिति निरूपितमस्माभिस्तर्करत्ने । एव वेदकर्तृत्वेनापि तत्सिद्धिः । 'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे 'इति श्रुतेः । 'वेदः सकर्तृकः वाक्यत्वात् भारतादिवदित्यनुमानाच्च वेदस्य सकर्तृकत्वावगमात् । स्मर्तार इतिस्मृतिरप्युक्तार्थपरा, स्मृतिर्यथा स्वसमानविषयवाक्यापेक्षा तथा वेदः कल्पान्तरीयानुपूर्वीसदृशानुपूर्वीमानित्यन्यत्र निर्णीतत्वादित्यलं विस्तरः । तस्य चेश्वरस्योपासना श्रुतिस्मृत्याद्यनुसारेणानेकधा महद्भ्योऽवगन्तव्येति पल्लवेनालम् ॥

बालबुद्धिप्रकाशार्थं पदार्थानां प्रदीपिका ॥
रङ्गोजिभट्टपुत्रेण कोण्डभट्टेन निर्मिता ॥ १ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणरङ्गोजिभट्टात्मजकोण्डभट्टकृता पदार्थदीपिका समाप्ता ॥